Preliminary conversion to Devangari (Sanskrit 98 font)

श्रीश्रीभक्तिरसामृतसिन्धुः

भगवद्भक्तिभेदनिरूपकः
पूर्वविभागः

प्रथमलहरी सामान्यभक्तिः

श्रीश्रीराधागोविन्ददेवौ विजयेते

अखिलरसामृतमूर्तिः प्रसृमररुचिरुद्धतारकापालिः ।
कलितश्यामाललितो राधाप्रेयान् विधुर् जयति ॥१ ॥
हृदि यस्य प्रेरणया प्रवर्तितो ऽहम् वराकरूपो ऽपि ।
तस्य हरेः पदकमलं वन्दे चैतन्यदेवस्य ॥२ ॥
विश्राममन्दिरत्या तस्य सनातणतनोर् मदीशस्य ।
भक्तिरसामृतसिन्धुर् भवतु सदायम् प्रमोदाय ॥३ ॥
भक्तिरसामृतसिन्धौ चरतः परिभूतकालजालभियः ।
भक्तमकरान् अशीलितमुक्तिनदीकान् नमसामि ॥४ ॥
मीमांसकबडवाग्नेः कठिनाम् अपि कुण्ठयन्न् असौ ।
स्फुरतु सनातन सुचिरं तव भक्तिरसामृताम्भोधिः ॥५ ॥
भक्तिरसस्य प्रस्तुतिर् अखिलजगङ्मङ्गलप्रसङ्गस्य ।
अज्ञेनापि मयास्य क्रियते सुहृदाम् प्रमोदाय ॥६ ॥

एतस्य भगवद्भक्तिरसामृतपयोनिधेः ।
चत्वारह् खलु वक्ष्यन्ते भागाः पूर्वादयः क्रमात् ॥७ ॥
तत्र पूर्वे विभागे ऽस्मिन् भक्तिभेदनिरूपके ।
अनुक्रमेण वक्तव्यं लहरीणां चतुष्टयम् ॥८ ॥
आद्या सामान्यभक्त्याढ्या द्वितीया साधनान्विता ।
भावाश्रिता तृतीया च तुर्या प्रेमनिरूपिका ॥९ ॥
तत्रादौ सुष्ठु वैशिष्ट्यम् अस्याः कथयितुं स्फुटम् ।
लक्षणं क्रियते भक्तेर् उत्तमायाः सतां मतम् ॥१० ॥

अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिर् उत्तमा ॥११ ॥

यथा श्रीनारदपञ्चरात्रे __
सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवनं भक्तिर् उच्यते ॥१२ ॥

श्रीभागवतस्य तृतीयस्कन्धे च 3.29.1113 _
लक्षणं भक्तियोगस्य निर्गुणस्य ह्य् उदाहृतम् ।
अहैतुक्य् अव्यवहिता या भक्तिः पुरुषोत्तमे ॥१३ ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वम् अप्य् उत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥१४ ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥१५ ॥

सालोक्येत्यादिपद्यस्थभक्तोत्कर्षणिरूपणम् ।
भक्तेर् विशुद्धताव्यक्त्या लक्षणे पर्यवस्यति ॥१६ ॥
क्लेषघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणी च सा ॥१७ ॥

तत्रास्याः क्लेशघ्नत्वम् _
क्लेशास् तु पापं तद्बीजम् अविद्या चेति ते त्रिधा ॥१८ ॥

तत्र पापम् __
अप्रारब्धं भवेत् पापं प्रारब्धं चेति तद् द्विधा ॥१९ ॥

तत्र अप्रारब्धहरत्वम् यथा एकडशे 11.14.19 _
यथाग्निः सुसमिद्धार्चिः करोत्य् एधांसि भस्मसात् ।
तथा मद्विषयाभक्तिर् उद्धवैनांसि कृत्स्नशः ॥२० ॥

प्रारब्धहरत्वम् यथा तृतीये 3.33.6 _
यन्नामधेयश्रवणानुकीर्तनाद्
यत्प्रह्वणद् यत्स्मरणाद् अपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते
कुतः पुनस् ते भगवन् नु दर्शनात् ॥२१ ॥

दुर्जातिर् एव सवनायोग्यत्वे कारणम् मतम् ।
दुर्जात्यारम्भकं पापं यत् स्यात् प्रारब्धम् एव तत् ॥२२ ॥

पद्मपुराने च __
अप्रारब्धफलं पापं कूटं बीजं फलोन्मुखम् ।

क्रमेणैव प्रलीयेत विष्णुभक्तिरतात्मनाम् ॥२३ ॥

बीजहरत्वम् यथा षष्ठे 6.2.17 _
तैस् तान्य् अघानि पूयन्ते तपोदानव्रतादिभिः ।
नाधर्मजं तधृदयं तद् अपीशाङ्घ्रिसेवया ॥२४ ॥

अविद्याहरत्वम् यथा चतुर्थे 4.22.39 _
यत्पादपङ्कजपलाशविलासभक्त्या
कर्माशयं ग्रथितम् उद्ग्रथयन्ति सन्तः ।
तद्वन् न रिक्तमतयो यतयो ऽपि रुद्ध
स्रोतोगणास् तम् अरणं भज वासुदेवम् ॥२५ ॥

पाद्मे च __
कृतानुयात्राविद्याभिर् हरिभक्तिर् अनुत्तमा ।
अविद्यां निर्दहत्य् आशु दावज्वालेव पन्नगीम् ॥२६ ॥

शुभदत्वम् __
शुभानि प्रीणनं सर्वजगताम् अनुरक्तता ।
सद्गुणाः सुखम् इत्यादीन्य् आख्यातानि मनीषिभिः ॥२७ ॥

तत्र जगत्प्रीणनादिद्वयप्रदत्वम् यथा पाद्मे __
येनार्चितो हरिस् तेन तर्पितानि जगन्त्य् अपि ।
रज्यन्ति जन्तवस् तत्र जन्गमाः स्थावरा अपि ॥२८ ॥

सद्गुणादिप्रदत्वम् यथा पञ्चमे 5.18.12 _
यस्यास्ति भक्तिर् भगवत्य् अकिञ्चना
सर्वैर् गुणैस् तत्र समासते सुराः ।
हराव् अभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिः ॥२९ ॥

सुखप्रदत्वम् __
सुखं वैषयिकं ब्राह्मम् ऐश्वरं चेति तत् त्रिधा ॥३० ॥

यथा तन्त्रे __
सिद्धयः परमाश्चर्या भुक्तिर् मुक्तिश् च शाश्वती ।
नित्यं च परमानन्दो भवेद् गोविन्दभक्तितः ॥३१ ॥

यथा हरिभक्तिसुधोदये च __
भूयो ऽपि याचे देवेश त्वयि भक्तिर् दृढास्तु मे ।
या मोक्षान्तचतुर्वर्ग फलदा सुखदा लता ॥३२ ॥

मोक्षलघुताकृत् __
मनाग् एव प्ररूढायां हृदये भगवाद्रतौ ।
पुरुषार्थास् तु चत्वारास् तृणायन्ते समन्ततः ॥३३ ॥

यथा श्रीनारदपञ्चरात्रे __
हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः ।
भुक्तयश् चाद्भुतास् तस्याश् चेटिकावद् अनुव्रताः ॥३४ ॥ इति ।

सुदुर्लभा __
साधनाघैर् अनासन्गैर् अलभ्या सुचिराद् अपि ।
हरिणा चाश्वदेयेति द्विधा सा स्यात् सुदुर्लभा ॥३५ ॥

तत्र आद्या यथा तान्त्रे __
ज्ञानतः सुलभा मुक्तिर् भुक्तिर् यज्ञादिपुण्यतः ।
सेयं साधनसाहस्रैर् हरिभक्तिः सुदुर्लभा ॥३६ ॥

द्वितीया यथा पञ्चमस्कन्धे 5.6.18 __
राजान् पतीर् गुरुर् अलं भवतां यदूनां
दैवं प्रियः कुलपतिः क्व च किङ्करो वः ।
अस्त्व् एवम् अङ्ग भजतां भगवान् मुकुन्दो
मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ॥३७ ॥

सान्द्रानन्दविशेषात्मा __
ब्रह्मानन्दो भवेद् एष चेत् परार्द्धगुणीकृतः ।
नैति भक्तिसुखाम्भोधेः परमाणुतुलाम् अपि ॥३८ ॥

यथा हरिभक्तिसुधोदये __
त्वत्साक्षात्करणाह्लादविशुद्धाब्धिस्थितस्य मे ।
सुखानि गोष्पदायन्ते ब्राह्माण्य् अपि जगद्गुरो ॥३९ ॥

तथा भावार्थदीपिकायां 10.88.11 च _
त्वत्कथामृतपाथोधौ विहरन्तो महामुदः ।
कुर्वन्ति कृतिनः केचित् चतुर्वर्गं तृणोपमम् ॥४० ॥

श्रीकृष्णाकर्षिणी __
कृत्वा हरिं प्रेमभाजं प्रियवर्गसमन्वितम् ।
भक्तिर् वशीकरोतीति श्रीकृष्णाकर्षिणी मता ॥४१ ॥

यथैकादशे 11.14.20 __

न साध्यति माम् योगो न साङ्ख्यं धर्म उद्धव ।
न स्वाध्यायस् तपस् त्यागो यथा भक्तिर् ममोर्जिता ॥४२ ॥

सप्तमे 7.10.48 च नारदोक्तौ __
यूयं नृलोके बत भूरिभागा
लोकं पुनाना मुनयोऽभियन्ति ।
येषां गृहान् आवसतीति साक्षाद्
गुढं परं ब्रह्म मनुष्यलिङ्गम् ॥४३ ॥

अग्रतो वक्ष्यमाणायास् त्रिधा भक्तेर् अनुक्रमात् ।
द्विशः षड्भिः पदैर् एतन् माहात्यं परिकीर्तितम् ॥४४ ॥

किं च _
स्वल्पापि रुचिर् एव स्याद् भक्तितत्त्वावबोधिका ।
युक्तिस् तु केवला नैव यद् अस्या अप्रतिष्ठता ॥४५ ॥

तत्र प्राचीनैर् अप्य् उक्तम् _
यत्नेनापादितो ऽप्य् अर्थः कुशलैर् अनुमातृभिः ।
अभियुक्ततरैर् अन्यैर् अन्यथैवोपपाद्यते ॥४६ ॥

इति श्री श्री भक्तिरसामृतसिन्धौ
पूर्वभागे भक्तिसामान्य लहरी प्रथमा

द्वितीया लहरी
साधनभक्तिः

सा भक्तिः साधनं भावः प्रेमा चेति त्रिधोदिता ॥१ ॥

तत्र साधनभक्तिः _
कृतिसाध्या भवेत् साध्यभावा सा साधनाभिधा ।
नित्यसिद्धस्य भावस्य प्राकट्यं हृदि साध्यता ॥२ ॥
सा भक्तिः सप्तमस्कन्धे भङ्ग्या देवर्षिणोदिता ॥३ ॥

यथा सप्तमे 7.1.31 __
तस्मात् केनाप्य् उपायेन मनः कृष्णे निवेशयेत् ॥४ ॥ इति ।

वैधी रागानुगा चेति सा द्विधा साधनाभिधा ॥५ ॥

तत्र वैधी __
यत्र रागानवाप्तत्वात् प्रवृत्तिर् उपजायते ।
शासनेनैव शास्त्रस्य सा वैधी भक्तिर् उच्यते ॥६ ॥

यथ द्वितीये 2.1.6 __
तस्माद् भारत सर्वात्मा भगवान् ईश्वरो हरिः ।
श्रोतव्यः कीर्तितव्यश् च स्मर्तव्यश् चेछताभयम् ॥७ ॥

पाद्मे च __
स्मर्तव्यः सततं विष्णुर् विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युर् एतयोर् एव किङ्कराः ॥८ ॥

इत्य् असौ स्याद् विधिर् नित्यः सर्ववर्णाश्रमादिषु ।
नित्यत्वे ऽप्य् अस्य निर्णीतम् एकादश्यादिवत्फलम् ॥९ ॥

यथा एकादाशे 11.5.23 तु व्यक्तम् एवोक्तम् __
मुख बाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर् विप्रादयः पृथक् ॥१० ॥
य एषां पुरुषं साक्षाद् आत्मप्रभवम् ईश्वरम् ।
न भजन्त्य् अवजानन्ति स्थानाद् भ्रष्टाः पतन्त्य् अधः ॥११ ॥

तत् फलं च तत्रैव 11.27.49 __
एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्न् उभ्यतः सिद्धिं मत्तो विन्दत्य् अभीप्सिताम् ॥१२ ॥

पञ्चरात्रे च __
सुरर्षे विहिता शास्त्रे हरिम् उद्दिश्य या क्रिया ।
सैव भक्तिर् इति प्रोक्ता तया भक्तिः परा भवेत् ॥१३ ॥

तत्र अधिकारी __
यः केनाप्य् अतिभाग्येन जातश्रद्धो ऽस्य सेवने ।
नातिसक्तो न वैराग्यभाग् अस्याम् अधिकार्य् असौ ॥१४ ॥

यथैकादशे 11.20.28 __
यदृच्छया मत्कथादौ जातश्रद्धो ऽस्तु यः पुमान् ।
न निर्विण्णो नातिसक्तो भक्तियोगो ऽस्य सिद्धिदः ॥१५ ॥

उत्तमो मध्यमश् च स्यात् कनिष्ठश् चेति स त्रिधा ॥१६ ॥

तत्र उत्तमः _
शास्त्रे युक्तौ च निपुणः सर्वथा दृढनिश्चयः ।
प्रौढश्रद्धो ऽधिकारी यः स भक्ताव् उत्तमो मतः ॥१७ ॥

तत्र मध्यमः _
यः शास्त्रादिष्व् अनिपुणः श्रद्धावान् स तु मध्यमः ॥१८ ॥

तत्र कनिष्ठः _
यो भवेत् कोमलश्रद्धः स कनिष्ठो निगद्यते ॥१९ ॥

तत्र गीतादिषूक्तानां चतुर्णाम् अधिकारिणाम् ।
मध्ये यस्मिन् भगवतह् कृपा स्यात् तत्प्रियस्य वा ॥२० ॥
स क्षीणतत्तद्भावः स्याच् छुद्धभक्त्यधिकारवान् ।
यथेभः शौनकादिश् च ध्रुवः स च चतुःसनः ॥२१ ॥
भुक्तिमुक्तिस्पृहा यावत् पिशाची हृदि वर्तते ।
तावद् भक्तिसुखस्यात्र कथम् अभ्युदयो भवेत् ॥२२ ॥
तत्रापि च विशेषेण गतिम् अण्वीम् अनिच्छतः ।
भक्तिर् हृतमनःप्राणान् प्रेम्णा तान् कुरुते जनान् ॥२३ ॥

तथा च तृतीये 3.25.36 _
तैर् दर्शनीयावयवैर् उदार
विलासहासेक्षितवामसूक्तैः ।
हृतात्मनो हृतप्राणांश् च भक्तिर्
अनिच्छतो मे गतिम् अण्वीं प्रयुङ्क्ते ॥२४ ॥

श्री कृष्णचरणाम्भोजसेवानिर्वृतचेतसाम् ।
एषां मोक्षाय भक्तानां न कदाचित् स्पृहा भवेत् ॥२५ ॥

यथा तत्रैव श्रीमदुद्धवोक्तौ 3.4.15 __
को न्व् ईश ते पादसरोजभाजां
सुदुर्लभो ऽर्थेषु चतुर्ष्व् अपीह ।
तथापि नाहं प्रवृणोमि भूमन्
भवत्पदाम्भोजनिषेवणोत्सुकः ॥२६ ॥

तत्रैव श्रीकपिलदेवोक्तौ 3.25.35 _
नैकात्मतां मे स्पृहयन्ति केचिन्
मत्पादसेवाभिरता मदीहाः ।
ये ऽन्योन्यतो भागवताः प्रसज्य
सभाजयन्ते मम पौरुषाणि ॥२७ ॥

तत्रैव 3.29.13 __
सालोक्यसार्ष्टिसामीप्य सारूप्यैकत्वम् अप्य् उत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥२८ ॥

चतुर्थे श्रीध्रुवोक्तौ 4.9.10 __
या निर्वृतिस् तनुभृतां तव पादपद्म
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् ।
सा ब्रह्मणि स्वमहिमन्य् अपि नाथ मा भूत्
किं त्व् अन्तकासिलुलितात् पततां विमानात् ॥२९ ॥

तत्रैव श्रीमदादिराजोक्तौ 4.20.24 _
न कामये नाथ तद् अप्य् अहं क्वचिन्
न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान् मुखच्युतो
विधत्स्व कर्णायुतम् एष मे वरः ॥३० ॥

पञ्चमे श्रीशुकोक्तौ 5.14.44 _
यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान्
प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् ।
नैच्छन् नृपस् तदुचितं महतां मधुद्विट्
सेवानुरक्तमनसाम् अभवो ऽपि फल्गुः ॥३१ ॥

षष्ठे श्रीवृत्रोक्तौ 6.11.25 _
न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीर् अपुनर्भवं वा
समञ्जस त्वा विरहय्य काङ्क्षे ॥३२ ॥

तत्रैव श्रीरुद्रोक्तौ 6.17.28 _
नारायणपराः सर्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्व् अपि तुल्यार्थदर्शिनः ॥३३ ॥

तत्रैव इन्द्रोक्तौ 6.18.74 _
आराधनं भगवत ईहमाना निराशिषः ।
ये तु नेच्छन्त्य् अपि परं ते स्वार्थकुशलाः स्मृताः ॥३४ ॥

सप्तमे प्रह्लादोक्तौ 7.6.25 _
तुष्टे च तत्र किम् अलभ्यम् अनन्त आद्ये
किं तैर् गुणव्यतिकराद् इह ये स्वसिद्धाः ।
धर्मादयः किम् अगुणेन च काङ्क्षितेन
सारं जुषां चरणयोर् उपगायतां नः ॥३५ ॥

तत्रैव शक्रोक्तौ 7.8.42 _

प्रत्यानीताः परम भवता त्रायता नः स्वभागा
दैत्याक्रान्तं हृदयकमलं तद्गृहं प्रत्यबोधि ।
कालग्रस्तं कियद् इदम् अहो नाथ शुश्रूषतां ते
मुक्तिस् तेषां न हि बहुमता नारसिंहापरैः किम् ॥३६ ॥

अष्टमे श्रीगजेन्द्रोक्तौ 8.3.20 _
एकान्तिनो यस्य न कञ्चनार्थं
वाञ्छन्ति ये वै भगवत्प्रपन्नाः ।
अत्यद्भुतं तच्चरितं सुमङ्गलं
गायन्त आनन्दसमुद्रमग्नाः ॥३७ ॥

नवमे श्रीवैकुण्ठनाथोक्तौ 9.4.67 __
मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतो ऽन्यत् कालविप्लुतम् ॥३८ ॥

श्रीदशमे नागपत्नीस्तुतौ 10.16.37 _
न नाकपृष्ठं न च सार्वभौमं
न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीर् अपुनर्भवं वा
वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥३९ ॥

तत्रैव श्रीवेदस्तुतौ 10.87.21 _
दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्
चरितमहामृताब्धिपरिवर्तपरिश्रमणाः ।
न परिलषन्ति केचिद् अपवर्गम् अपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥४० ॥

एकादशे श्रीभगवदुक्तौ 11.20.34 _
न किञ्चित् साधवो धीरा भक्ता ह्य् एकान्तिनो मम ।
वाञ्छन्त्य् अपि मया दत्तं कैवल्यम् अपुनर्भवम् ॥४१ ॥

तथा 11.14.14 _
न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीर् अपुनर्भवं वा
मय्य् अर्पितात्मेच्छति मद् विनान्यत् ॥४२ ॥

द्वादशे श्रीरुद्रोक्तौ 12.10.6 _
नैवेच्छत्य् आशिषः क्वापि ब्रह्मर्षिर् मोक्षम् अप्य् उत ।
भक्तिं परां भगवति लब्धवान् पुरुषे ऽव्यये ॥४३ ॥

पद्मपुराणे च कार्त्तिकमाहात्म्ये dAmodarAShTake _
वरं देव मोक्षं न मोक्षावधिं वा
न चान्यं वृणेऽहं वरेशाद् अपीह ।
इदं ते वपुर् नाथ गोपालब्लं
सदा मे मनस्य् अविरास्तां किम् अन्यैः ॥४४ ॥

कुवेरात्मजौ बद्धमूर्त्यैव यद्वत्
त्वया मोचितौ भक्तिबद्धौ कृतौ च ।
तथा प्रेमभक्तिं स्वकां मे प्रयच्छ
न मोक्षे ग्रहो मेऽस्ति दामोदरेह ॥४५ ॥

हयशीर्षीयश्रीनारायणव्यूहस्तवे च _
न धर्मं कामम् अर्थं वा मोक्षं वा वरदेश्वर ।
प्रार्थये तव पादाब्जे दास्यम् एवाभिकामये ॥४६ ॥

तत्रैव _
पुनः पुनर् वरान् दित्सुर् विष्णुर् मुक्तिं न याचितः ।
भक्तिर् एव वृता येन प्रह्लादं तं नमाम्य् अहं ॥४७ ॥
यदृच्छया लब्धम् अपि विष्णोर् दाशरथेस् तु यः ।
नैच्छन् मोक्षं विना दास्यं तस्मै हनुमते नमः ॥४८ ॥

अतव प्रसिद्धम् श्रीहनुमद्वाक्यम् __
भवबन्धच्छिदे तस्यै स्पृहयामि न मुक्तये ।
भवान् प्रभुर् अहं दास इति यत्र विलुप्यते ॥४९ ॥

श्रीनारद पञ्चरात्रे च जितन्तेस्तोत्रे _
धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन ।
त्वत्पादपङ्कजस्याधो जीवितं दीयतं मम ॥५० ॥
मोक्षसालोक्यसारूप्यान् प्रार्थये न धराधर ।
इच्छामि हि महाभाग कारुण्यं तव सुव्रत ॥५१ ॥

अतव श्रीभागवते षष्ठे 6.14.5
मुक्तानाम् अपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्व् अपि महामुने ॥५२ ॥

प्रथमे च श्रीधर्मराजमातुः स्तुतौ 1.8.20 _
तथा परमहंसानां मुनीनाम् अमलात्मनाम् ।
भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः ॥५३ ॥

तत्रैव श्रीसूतोक्तौ 1.7.10 _
आत्मारामाश् च मुनयो निर्ग्रन्था अप्य् उरुक्रमे ।
कुर्वन्त्य् अहैतुकीं भक्तिम् इत्थम्भूतगुणो हरिः ॥५४॥

अत्र त्याज्यतयैवोक्ता मुक्तिः पञ्चविधापि चेत् ।
सालोक्यादिस् तथाप्य् अत्र भक्त्या नातिविरुध्यते ॥५५॥
सुखैश्वर्योत्तरा सेयं प्रेमसेवोत्तरेत्य् अपि ।
सालोक्यादिर् द्विधा तत्र नाद्या सेवाजुषं मता ॥५६॥
किन्तु प्रेमैकमाधुर्यजुष एकान्तिनो हरौ ।
नैवाङ्गीकुर्वते जातु मुक्तिं पञ्चविधाम् अपि ॥५७॥
तत्राप्य् एकान्तिनां श्रेष्था गोविन्दहृतमानसाः ।
येषां श्रीशप्रसादोऽपि मनो हर्तुं न शक्नुयात् ॥५८॥
सिद्धान्ततस् त्व् अभेदेऽपि श्रीशकृष्णस्वरूपयोः ।
रसेनोत्कृष्यते कृष्णरूपम् एषा रसस्थितिः ॥५९॥
शास्त्रतः श्रूयते भक्तौ नृमात्रस्याधिकारिता ।
सर्वाधिकारितां माघस्नानस्य ब्रुवता यतः ।
दृष्तान्तिता वशिष्ठेन हरिभक्तिर् नृपं प्रति ॥६०॥

यथा पाद्मे _
सर्वे ऽधिकारिणो ह्य् अत्र हरिभक्तौ यथा नृप ॥६१॥

काशीखण्डे च तथा _
अन्त्यजा अपि तद्राष्ट्रे शङ्खचक्राङ्कधारिणः ।
सम्प्राप्य वैष्णवीं दीक्षां दीक्षिता इव सम्बभुः ॥६२॥

अपि च _
अननुष्ठानतो दोषो भक्त्यङ्गानां प्रजायते ।
न कर्मणाम् अकरणाद् एष भक्त्यधिकारिणाम् ॥६३॥
निषिद्धाचारतो दैवात् प्रायश्चित्तं तु नोचितम् ।
इति वैष्णवशास्त्राणां रहस्यं तद्विदां मतम् ॥६४॥

यथैकादशे 11.20.26, 11.21.2 __
स्वे स्वे ऽधिकारे या निष्ठा सा गुणः परिकीर्तितः ।
विपर्ययस् तु दोषः स्याद् उभयोर् एष निश्चयः ॥६५॥

प्रथमे 1.5.17 __
त्यक्त्वा स्वधर्मं चरणाम्बुजम् हरेर्
भजन्न् अपक्वो ऽथ पतेत् ततो यदि ।
यत्र क्व वाभद्रम् अभूद् अमुष्य किं
को वार्थ आप्तो ऽभजतां स्वधर्मतः ॥६६॥

एकादशे 11.11.37
आज्ञायैव गुणान् दोषान् मयादिष्टान् अपि स्वकान् ।
धर्मान् सन्त्यज्य यः सर्वान् मां भजेत् स च सत्तमः ॥६७॥

तत्रैव 11.5.41 _
देवर्षिभूताप्तनृणां पितृणां
न किङ्करो नायम् ऋणी च राजन् ।
सर्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कर्तम् ॥६८॥

श्रीभगवद्गीतासु 18.66 _
सर्वधर्मन् परित्याज्य माम् एकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा सुचः ॥६९॥

अगस्त्यसंहितायाम् __
यथा विधिनिषेधौ तु मुक्तं नैवोपसर्पतः ।
तथा न स्पृशतो रामोपासकं विधिपूर्वकम् ॥७०॥

एकादशे एव 11.5.42 _
स्वपादमुलं भजतः प्रियस्य
त्यक्तान्य् अभावस्य हरिः परेशः ।
विकर्म यच् चोत्पतितं कथञ्चिद्
धुनोति सर्वं हृदि सन्निविष्टः ॥७१॥

हरिभक्तिविलासे ऽस्या भक्तेर् अङ्गानि लक्षशः ।
किन्तु तानि प्रसिद्धानि निर्दिश्यन्ते यथामति ॥७२॥

अत्र अङ्गलक्षणम् _
आश्रितावान्तरानेकभेदं केवलम् एव वा ।
एकं कर्मात्र विद्वद्भिर् एकं भक्त्यङ्गम् उच्यते ॥७३॥

अथ अङ्गानि _
गुरुपादाश्रयस् तस्मात् कृष्णदीक्षादिशिक्षणम् ।
विश्रम्भेण गुरोः सेवा साधुवर्त्मानुवर्तनम् ॥७४॥
सद्धर्मपृच्छा भोगादित्यागः कृष्णस्य हेतवे ।
निवासो द्वारकादौ च गङ्गादेर् अपि सन्निधौ ॥७५॥
व्यावहारेषु सर्वेषु यावदर्थानुवर्तिता ।
हरिवासरसम्मानो धात्र्यश्वत्थादिगौरवम् ॥७६॥
एषाम् अत्र दशाङ्गानां भवेत् प्रारम्भरुपता ॥७७॥

सङ्गत्यागो विदूरेण भगवद्विमुखैर् जनैः ।
शिष्याद्यननुबन्धित्वं महारम्भाद्यनुद्यमः ॥७८ ॥
बहुग्रन्थकलाभ्यासव्याख्यावादविवर्जनम् ॥७९ ॥
व्यावहारे ऽप्य् अकार्पण्यं शोकाद्यवशवर्तिता ॥८० ॥
अन्यदेवान् अवज्ञा च भूतानुद्वेगदायिता ।
सेवानामापराधानाम् उद्भवाभावकारिता ॥८१ ॥
कृष्णतद्भक्तविद्वेषविनिन्दाद्यसहिष्णुता ।
व्यतिरेकतयामीषां दशानां स्याद् अनुष्ठितीः ॥८२ ॥
अस्यास् तत्र प्रवेशाय द्वारत्वे ऽप्य् अङ्गविंशतेः ।
त्रयां प्रधानम् एवोक्तं गुरुपादाश्रयादिकम् ॥८३ ॥
धृतिर् वैष्णवचिह्नानां हरेर् नामाक्षरस्य च ।
निर्माल्यादेश् च तस्याग्रे ताण्डवं दण्डवन्नतिः ॥८४ ॥
अभ्युत्थानम् अनुव्रज्या गतिः स्थाने परिक्रमः ।
अर्चनं परिचर्या च गीतं सङ्कीर्तनं जपः ॥८५ ॥
विज्ञप्तिः स्तवपाठश् च स्वादो नैवेद्यपाद्ययोः ।
धूपमाल्यादिसौरभ्यं श्रीमूर्तेः स्पृष्टिर् ईक्षणम् ॥८६ ॥
आरात्रिकोत्सवादेश् च श्रवणं तत्कृपेक्षणम् ।
स्मृतिर् ध्यानं तथा दास्यं सख्यम् आत्मनिवेदनम् ॥८७ ॥
निजप्रियोपहरणं तदर्थे ऽखिलचेष्टितम् ।
सर्वथा शरणापत्तिस् तदीयानां च सेवनम् ॥८८ ॥
तदीयास् तुलसीशास्त्रमथुरावैष्णवादयः ।
यथावैभवसामग्री सद्गोष्ठीभिर् महोत्सवः ॥८९ ॥
ऊर्जादरो विशेषेण यात्रा जन्मदिनादिषु ।
श्रद्धा विशेषतः प्रीतिः श्रीमूर्तेर् अङ्घ्रिसेवने ॥९० ॥
श्रीमद्भागवतार्थानाम् आस्वादो रसिकैः सह ।
सजातीयाशये स्निग्धे साधौ सङ्गः स्वतो वरे ॥९१ ॥
नामसङ्कीर्तनं श्रीमथुरामण्डले स्थितिः ॥९२ ॥
अङ्गानां पञ्चकस्यास्य पूर्वं विलिखितस्य च ।
निखिलश्रैष्ठ्यबोधाय पुनर् अप्य् अत्र कीर्तनम् ॥९३ ॥
इति कायहृषीकान्तःकरणानाम् उपासनाः ॥९४ ॥
चतुःषष्टिः पृथक् साङ्घातिकभेदात् क्रमादिनाः ॥९५ ॥
अथार्षानुमतेनैषाम् उदाहरणम् ईर्यते ॥९६ ॥

१ _ तत्र गुरुपादाश्रयो यथा एकादशे 11.3.21 _
तस्माद् गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्य् उपशमाश्रयम् ॥९७ ॥

२ _ श्रीकृष्णदीक्षादिशिक्षणं यथा तत्रैव 11.3.22
तत्र भागवतान् धर्मान् शिक्षेद् गुर्वात्मदैवतः ।
अमाययानुवृत्त्या यैस् तुष्येद् आत्मात्मदो हरिः ॥९८ ॥

३ _ विश्रम्भेण गुरोः सेवा यथा तत्रैव 11.17.27
आचार्यं मां विजानीयान् नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुः ॥९९ ॥

४ _ साधुवर्त्मानुवर्तनम् यथा स्कान्दे _
स मृग्यः श्रेयसां हेतुः पन्थाः सन्तापवर्जितः ।
अन्वाप्तश्रमं पूर्वे येन सन्तः प्रतस्थिरे ॥१०० ॥

ब्रह्मयामले च _
श्रुतिस्मृतिपुराणादिपञ्चरात्रविधिं विना ।
ऐकान्तिकी हरेर् भक्तिर् उत्पातायैव कल्पते ॥१०१ ॥

भक्तिर् ऐकान्तिकी वेयम् अविचारात् प्रतीयते ।
वस्तुतस् तु तथा नैव यद् अशास्त्रीयतेक्ष्यते ॥१०२ ॥

५ _ सद्धर्मपृच्छा यथा नारदीये __
अचिराद् एव सर्वार्थः सिध्यत्य् एषाम् अभीप्सितः ।
सद्धर्मस्यावबोधाय येषां निर्बन्धिनी मतिः ॥१०३ ॥

६ _ कृष्णार्थे भोगादित्यागो यथा पाद्मे _
हरिम् उद्दिश्य भोगानि काले त्यक्तवतस् तव ।
विष्णुलोकस्थिता सम्पदलोला सा प्रतीक्षते ॥१०४ ॥

७ _ द्वारकादिनिवासो यथा स्कान्दे __
संवत्सरं वा षण्मासान् मासं मासार्धम् एव वा ।
द्वारकावासिनः सर्वे नरा नार्यश् चतुर्भुजाः ॥१०५ ॥

आदिपदेन पुरुषोत्तमवासश् च यथा ब्राह्मे __
अहो क्षेत्रस्य माहात्म्यं समन्ताद् दशयोजनम् ।
दिविष्ठा यत्र पश्यन्ति सर्वान् एव चतुर्भुजान् ॥१०६ ॥

गङ्गादिवासो यथा प्रथमे 1.19.6 __
या वै लसच्छ्रीतुलसीविमिश्र
कृष्णाङ्घ्रिरेण्वभ्यधिकाम्बुनेत्री ।
पुनाति सेशान् उभयत्र लोकान्
कस् तां न सेवेत मरिष्यमाणः ॥१०७ ॥

८ _ यावदर्थानुवर्तिता यथा नारदीये __
यावता स्यात् स्वनिर्वाहः स्वीकुर्यात् तावद् अर्थवित् ।

आधिक्ये न्यूनतायां च च्यवते परमार्थतः ॥१०८ ॥

९ _ हरिवासरसम्मानो यथा ब्रह्मवैवर्ते _
सर्वपापप्रशमनं पुण्यम् आत्यन्तिकं तथा ।
गोविन्दस्मारणं नृणाम् एकदश्याम् उपोषणम् ॥१०९ ॥

१० _ धात्र्यश्वत्थादिगौरवम् यथा स्कान्दे _
अश्वत्थतुलसीधात्रीगोभूमिसुरवैष्णवाः ।
पूजिताः प्रणताः ध्याताः क्षपयन्ति नृणाम् अघम् ॥११० ॥

११ _ अथ श्रीकृष्णविमुखजनसंत्यागो यथा कात्यायनसंहितायाम् _
वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥१११ ॥

विष्णुरहस्ये च _
आलिङ्गनं वरं मन्ये व्यालव्याघ्रजलौकसाम् ।
न सङ्गः शल्ययुक्तानां नानादेवैकसेविनाम् ॥११२ ॥

१२ _ १३ _ १४ _ शिष्याननुबन्धित्वादित्रयं यथा सप्तमे 7.13.8 _
न शिष्यान् अनुबध्नीत ग्रन्थान् नैवाभ्यसेद् बहून् ।
न व्याख्याम् उपयुञ्जीत नारम्भान् आरभेत् क्वचित् ॥११३ ॥

१५ _ व्यावहारे ऽप्य् अकार्पण्यं यथा पाद्मे __
अलब्धे वा विनष्टे वा भक्ष्याच्छादनसाधने ।
अविक्लवमतिर् भूत्वा हरिम् एव धिया स्मरेत् ॥११४ ॥

१६ _ शोकाद्यवशवर्तिता यथा तत्रैव __
शोकामर्षादिभिर् भावैर् आक्रान्तं यस्य मानसम् ।
कथं तत्र मुकुन्दस्य स्फूर्तिसम्भावना भवेत् ॥११५ ॥ ।

१७ अन्यदेवानज्ञा यथा तत्रैव __
हरिर् एव सदाराध्यः सर्वदेवेश्वरेश्वरः ।
इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन ॥११६ ॥

१८ भूतानुद्वेगदायिता यथा महाभारते __
पितेव पुत्रं करुणो नोद्वेजयति यो जनम् ।
विशुद्धस्य हृषीकेशस् तूर्णं तस्य प्रसीदति ॥११७ ॥

१९ _ सेवानामापराधानां वर्जनं यथा वाराहे __
ममार्चनापराधा ये कीर्त्यन्ते वसुधे मया ।
वैष्णवेन सदा ते तु वर्जनीयाः प्रयत्नतः ॥११८ ॥

पाद्मे च __
सर्वापराधकृद् अपि मुच्यते हरिसंश्रयः ।
हरेर् अप्य् अपराधान् यः कुर्याद् द्विपदपांशुलः ॥११९ ॥
नामाश्रयः कदाचित् स्यात् तरत्य् एव स नामतः ।
नाम्नो हि सर्वसुहृदो ह्य् अपराधात् पतत्य् अधः ॥१२० ॥

२० तन्निन्दाद्य् असहिष्णुता यथा श्रीदशमे 10.74.40 _
निन्दां भगवतः श्रृण्वंस् तत्परस्य जनस्य वा ।
ततो नापैति यः सो ऽपि यात्य् अधः सुकृताच् च्युतः ॥१२१ ॥

२१ _ अथ वैष्णवचिह्नधृतिः यथा पाद्मे __
ये कण्ठलग्नतुलसीनलिनाक्षामाला
ये बाहुमूलपरिचिह्नितशङ्खचक्राः ।
ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्
ते वैष्णवा भुवनम् आशु पवित्रयन्ति ॥१२२ ॥

२२ _ नामाक्षरधृतिः यथा स्कान्दे __
हरिनामाक्षरयुतं भाले गोपीमृडङ्कितम् ।
तुलसीमालिकोरस्कं स्पृशेयुर् न यमोद्भटाः ॥१२३ ॥

पाद्मे च __
कृष्णनामाक्षरैर् गात्रम् अङ्कयेच् चन्दनादिना ।
स लोकपावनो भुत्वा तस्य लोकम् अवाप्नुयात् ॥१२४ ॥

२३ _ निर्माल्यधृतिः यथा एकादशे 11.6.46 _
त्वयोपयुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास् तव मायां जयेमहि ॥१२५ ॥

स्कान्दे च __
कृष्णोत्तीर्णं तु निर्माल्यं यस्याङ्गं स्पृशते मुने ।
सर्वरोगैस् तथा पापैर् मुक्तो भवति नारद ॥१२६ ॥

२४ _ अग्रे ताण्डवं यथा द्वारकामाहात्म्ये __
यो नृत्यति प्रहृष्टात्मा भावैर् बहुषु भक्तितः ।
स निर्दहति पापानि मन्वन्तरशतेष्व् अपि ॥१२७ ॥

तथा श्रीनारदोक्तौ च __

नृत्यतां श्रीपतेर् अग्रे तालिकावादनैर् भृशम् ।
उड्डीयन्ते शरीरस्थाः सर्वे पातकपक्षिणः ॥ १२८ ॥

२५ _ दण्डवन्नतिः यथा नारदीये __
एको ऽपि कृष्णाय कृतः प्रणामो
दशाश्वमेधावभृथैर् न तुल्यः ।
दशाश्वमेधी पुनर् एति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥१२९ ॥

२६ _ अभ्यूत्थानं यथा ब्रह्माण्डे __
यान् आरूढं पुरः प्रेक्ष्य समायान्तं जनार्दनम् ।
अभ्युत्थानं नरः कुर्वन् पातयेत् सर्वकिल्बिषम् ॥ १३० ॥

२७ _ अनुव्रज्या यथा भविष्योत्तरे __
रथेन सह गच्छन्ति पार्श्वतः पृष्ठतो ऽग्रतः ।
विष्णुनैव समाः सर्वे भवन्ति श्वपदादयः ॥ १३१ ॥

२८ _ स्थाने गतिः
स्थानं तीर्थं गृहं चास्य तत्र तीर्थे गतिर् यथा ॥ १३२ ॥

पुराणान्तरे __
संसारमरुकान्तारनिस्तारकरणक्षमौ ।
स्लाघ्यौ ताव् एव चरणौ यौ हरेस् तीर्थगामिनौ ॥ १३३ ॥

आलये च यथा हरिभक्तिसुधोदये __
प्रवीशन्न् आलयं विष्णोर् दर्शनार्थं सुभक्तिमान् ।
न भूयः प्रविशेन् मातुः कुक्षिकारागृहं सुधीः ॥ १३४ ॥

२९ _ परिक्रमो यथा तत्रैव __
विष्णुं प्रदक्षिनीकुर्वन् यस् तत्रावर्तते पुनः ।
तद् एवावर्तनं तस्य पुनर् नावर्तते भवे ॥ १३५ ॥

स्कान्दे च चतुर्मास्यमाहात्म्ये __
चतुर्वारं भ्रमीभिस् तु जगत् सर्वं चराचरम् ।
क्रान्तं भवति विप्राग्र्य तत्तीर्थगमनादिकम् ॥ १३६ ॥

३० _ अथ अर्चनम् __
शुद्धिन्यासादिपूर्वाङ्गकर्मनिर्वाहपूर्वकम् ।
अर्चनम् तूपचाराणां स्यान् मन्त्रेणोपपादनम् ॥ १३७ ॥

तद् यथा दशमे _ 10.81.19
स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् ।
सर्वासाम् अपि सिद्धीनां मूलं तच्चरणार्चनं ॥ १३८ ॥

विष्णुरहस्ये च __
श्रीविष्णोर् अर्चनं ये तु प्रकुर्वन्ति नरा भुवि ।
ते यान्ति शाश्वतं विष्णोर् आनन्दं परमं पदम् ॥ १३९ ॥

३१ _ परिचर्या __
परिचर्या तु सेवोपकरणादिपरिष्क्रिया ।
तथा प्रकीर्णकच्छत्रवादित्राद्यैर् उपासना ॥ १४० ॥

यथा नारदीये __
मुहूर्तं वा मुहूर्तार्धं यस् तिष्ठेद् धरिमन्दिरे ।
स याति परमं स्थानं किम् उ शुश्रूषणे रताः ॥ १४१ ॥

यथा चतुर्थे 4.21.31 __
यत्पादसेवाभिरुचिस् तपस्विनाम्
अशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्य् अन्वहम् एधती सती
यथा पदाङ्गुष्ठविनिःसृता सरित् ॥ १४२ ॥

अङ्गानि विविधान्य् एव स्युः पूजापरिचर्ययोः ।
न तानि लिखितान्य् अत्र ग्रन्थबाहुल्यभीतितः ॥ १४३ ॥

३२ _ अथ गीतं यथा लैङ्गे __
ब्राह्मणो वासुदेवाख्यं गायमानो ऽनिशं परम् ।
हरेः सालोक्यम् आप्नोति रुद्रगानाधिकं भवेत् ॥ १४४ ॥

३३ _ अथ संकीर्तनम् __
नामलीलागुणदीनाम् उच्चैर्भाषा तु कीर्तनम् ॥ १४५ ॥

तत्र नामकीर्तनम् यथा विष्णुधर्मे __
कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्तते ।
भस्मीभवन्ति राजेन्द्र महापातककोटयः ॥ १४६ ॥

लीलाकीर्तनम् यथा सप्तमे 7.9.18 __
सो ऽहं प्रियस्य सुहृदः परदेवताया
लीलाकथास् तव नृसिंह विरिञ्चगीताः ।
अञ्जस् तितर्म्य् अनुगृणन् गुणविप्रमुक्तो

दुर्गाणि ते पदयुगालयहंससङ्गः ॥ १४७ ॥

गुणकीर्तनम् यथा प्रथमे 1.5.22 __
इदं हि पुंसस् तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतो ऽर्थः कविभिर् निरूपितो
यद् उत्तमःश्लोकगुणानुवर्णनम् ॥ १४८ ॥

३४ _ अथ जपः
मन्त्रस्य सुलघूच्चारो जप इत्य् अभिधीयते ॥ १४९ ॥

यथा पाद्मे __
कृष्णाय नम इत्य् एष मन्त्रः सर्वार्थसाधकः ।
भक्तानां जपतां भूप स्वर्गमोक्षफलप्रदः ॥ १५० ॥

३५ _ अथ विज्ञप्तिः यथा स्कान्दे _
हरिम् उद्दिश्य यत् किञ्चित् कृतं विज्ञापनं गिरा ।
मोक्षद्वारार्गलान् मोक्षस् तेनैव विहितस् तव ॥ १५१ ॥

सम्प्रार्थनात्मिका दैन्यबोधिका लालसामयी ।
इत्य् आदिर् विविधा धीरैः कृष्णे विज्ञप्तिर् ईरिता ॥ १५२ ॥

तत्र सम्प्रार्थनात्मिका यथा पाद्मे __
युवतीनां यथा यूनि यूनां च युवतौ यथा ।
मनो ऽभिरमते तद्वन् मनो ऽभिरमतां त्वयि ॥ १५३ ॥

दैन्यबोधिका यथा तत्रैव __
मत्तुल्यो नास्ति पापात्मा नापराधी च कश्चन ।
परिहारे ऽपि लज्जा मे किं ब्रूवे पुरुषोत्तम ॥ १५४ ॥

लालसामयी यथा श्रीनारदपञ्चरात्रे __
कदा गम्भीरया वाचा श्रिया युक्तो जगत्पते ।
चामरव्यग्रहस्तं माम् एवं कुर्व् इति वक्ष्यसि ॥ १५५ ॥

यथा वा __
कदाहं यमुनातीरे नामानि तव कीर्तयन् ।
उद्बाष्पः पुण्डरीकाक्ष रचयिष्यामि ताण्डवम् ॥ १५६ ॥

३६ _ अथ स्तवपाठः __
प्रोक्ता मनीषिभिर् गीतास्तवराजादयः स्तवाः ॥ १५७ ॥

यथा स्कान्दे __
श्रीकृष्णस्तवरत्नौघैर् येषां जिह्वा त्व् अलङ्कृता ।
नमस्या मुनिसिद्धानां वन्दनीया दिवौकसाम् ॥ १५८ ॥

नारसिंहे च __
स्तोत्रैः स्तवश् च देवाग्रे यः स्तौति मधुसूदनम् ।
सर्वपापविनिर्मुक्तो विष्णुलोकम् अवाप्नुयात् ॥ १५९ ॥

३७ _ अथ नैवेद्यास्वादो यथा पाद्मे __
नैवेद्यम् अन्नं तुलसीविमिश्रं
वीशेषतः पादजलेन सिक्तम् ।
यो ऽश्नाति नित्यं पुरतो मुरारेः
प्राप्णोति यज्ञायुतकोटिपुण्यम् ॥ १६० ॥

३८ _ अथ पाद्यास्वादो यथा तत्रैव __
न दानं न हविर् येषां स्वाध्यायो न सुरार्चनम् ।
तेऽपि पादोदकं पीत्वा प्रयान्ति परमां गतिम् ॥ १६१ ॥

३९ _ अथ धूपसौरभ्यम् यथा हरिभक्तिसुधोदये __
आघ्राणं यद् धरेर् दत्तधूपोच्छिष्टस्य सर्वतः ।
तद्भवव्यालदष्टानां नस्यं कर्म विषापहम् ॥ १६२ ॥

अथ माल्यसौरभ्यं यथा तन्त्रे __
प्रविष्टे नासिकारन्ध्रे हरेर् निर्माल्यसौरभे ।
सद्यो विलयम् आयाति पापपञ्जरबन्धनम् ॥ १६३ ॥

अगस्त्यसंहितायां च _
आघ्राणं गन्धपुष्पादेर् अर्चितस्य तपोधन ।
विशुद्धिः स्याद् अनन्तस्य घ्राणस्येहाभिधीयते ॥ १६४ ॥

४० _ अथ श्रीमूर्तेः स्पर्शनं यथा विष्णुधर्मोत्तरे __
स्पृस्ट्वा विष्णोर् अधिष्ठानं पवित्रः श्रद्धयान्वितः ।
पापबन्धैर् विनिर्मुक्तः सर्वान् कामान् अवाप्नुयात् ॥ १६५ ॥

४१ _ अथ श्रीमूर्तेर् दर्शनम् यथा वाराहे __
वृन्दावने तु गोविन्दं ये पश्यन्ति वसुन्धरे ।
न ते यमपुरं यान्ति यान्ति पुण्यकृतां गतिम् ॥ १६६ ॥

४२ _ आरात्रिकदर्शनं यथा स्कान्दे __

कोटयो ब्रह्महत्यानाम् अगम्यागमकोटयः।
दहत्य् आलोकमात्रेण विष्णोः सारात्रिकं मुखम्॥ १६७॥

उत्सवदर्शनं यथा भविष्योत्तरे __
रथस्थं ये निरीक्षन्ते कौतिकेनापि केशवम्।
देवतानां गणाः सर्वे भवन्ति श्वपचादयः॥ १६८॥

आदिशब्देन पूजादर्शनं यथाग्नेये __
पूजितं पूज्यमानं वा यः पश्येद् भक्तितो हरिम्॥१६९॥

४३ _ अथ श्रवणम्
श्रवणं नामचरितगुणादीनां श्रुतिर् भवेत्॥ १७०॥

तत्र नामश्रवणं यथा गारुडे __
संसारसर्पदष्टनष्टचेष्टैकभेषजम्।
कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन् नरः॥ १७१॥

चरित्रश्रवणं यथा चतुर्थे _ 4.29.41
तस्मिन् महन्मुखरिता मधुभिच्चरित्र
पीयूषशेषसरितः परितः स्रवन्ति।
ता ये पिबन्त्य् अवितृषो नृप गाढकर्णैस्
तान् न स्पृशन्त्य् अशनतृड्भयशोकमोहाः॥ १७२॥

गुणश्रवणं यथा द्वादशे 12.3.15 __
यस् तूत्तमःश्लोकगुणानुवादः
सङ्गीयते ऽभीक्ष्णम् अमङ्गलघ्नः।
तम् एव नित्यं शृणुयाद् अभीक्ष्णं
कृष्णे ऽमलां भक्तिम् अभीप्समानः॥ १७३॥

अथ तत्कृपेक्षणं यथा दशमे 10.14.8 __
तत् ते ऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम्।
हृद्वाग्वपुर्भिर् विदधन् नमस् ते
जीवेत यो मुक्तिपदे स दायभाक्॥ १७४॥

अथ स्मृतिः __
यथा कथं चिन्मनसा सम्बन्धः स्मृतिर् उच्यते॥ १७५॥

यथा विष्णुपुराणे 5.17.17 _
स्मृते सकलकल्याणभाजनं यत्र जायते।
पुरुषं तम् अजं नित्यं व्रजामि शरणं हरिम्॥ १७६॥

यथा च पाद्मे __
प्रयाणे चाप्रयाणे च यन्नाम स्मरतां नृणाम्।
सद्यो नश्यति पापौघो नमस् तस्मै चिदात्मने॥ १७७॥

अथ ध्यानम् __
ध्यानम् रुपगुणक्रीडासेवादेः सुष्ठु चिन्तनम्॥ १७८॥

तत्र रूपध्यानं यथा नारसिंहे __
भगवच्चरणद्वन्द्वध्यानं निर्द्वन्द्वम् ईरितम्।
पापिनो ऽपि प्रसङ्गेन विहितं सुहितं परम्॥ १७९॥

गुणध्यानं यथा विष्णुधर्मे __
ये कुर्वन्ति सदा भक्त्या गुणानुस्मरणं हरेः।
प्रक्षीणकलुषौघास् ते प्रविशन्ति हरेः पदम्॥ १८०॥

क्रीदाध्यानं यथा पद्मे __
सर्वमाधुर्यसाराणि सर्वाद्भुतमयानि च।
ध्यायन् हरेश् चरित्राणि ललितानि विमुच्यते॥ १८१॥

सेवाध्यानं यथा पुराणान्तरे __
मानसेनोपचारेन परिचर्य हरिं सदा।
परे वाङ्मनसा ऽगम्यं तं साक्षात् प्रतिपेदिरे॥ १८२॥

अथ दास्यम् __
दास्यं कर्मार्पणं तस्य कैङ्कर्यम् अपि सर्वथा॥ १८३॥

तत्र आद्यं यथा स्कान्दे __
तस्मिन् समर्पितं कर्म स्वाभाविकम् अपीश्वरे।
भवेद् भागवतो धर्मस् तत्कर्म किमुतार्पितम्॥ १८४॥

कर्म स्वाभाविकं भद्रं जपध्यानार्चनादि च।
इतीदं द्विविधं कृष्णे वैष्णवैर् दास्यम् अर्पितम्॥ १८५॥
मृदुश्रद्धस्य कथिता स्वल्पा कर्माधिकारिता।
तदर्पितं हरौ दास्यम् इति कैश्चिद् उदीर्यते॥ १८६॥

द्वितियं यथा नारदीये __
ईहा यस्य हरेर् दास्ये कर्मणा मनसा गिरा।
निखिलास्व् अप्य् अवस्थासु जीवन्मुक्तः स उच्यते॥ १८७॥

अथ सख्यम् __
विश्वासो मित्रवृत्तिश् च सख्यं द्विविधम् ईरितम् ॥ १८८ ॥

तत्र आद्यं यथा महाभारते __
प्रतिज्ञे तव गोविन्द न मे भक्तः प्रणश्यति ।
इति संस्मृत्य संस्मृत्य प्राणान् संधारयाम्य् अहम् ॥ १८९ ॥

तथा एकादशे 11.2.53 च __
त्रिभुवनविभवहेतवे ऽप्य् अकुण्ठ
स्मृतिर् अजितात्मसुरादिभिर् विमृग्यात् ।
न चलति भगवत्पदारविन्दाल्
लवनिमिषार्धम् अपि यः स वैष्णवाग्र्यः ॥१९० ॥

श्रद्धामात्रस्य तद्भक्ताव् अधिकारित्वहेतुता ।
अङ्गत्वम् अस्य विश्वासविशेषस्य तु केशवे ॥ १९१ ॥

द्वितीयं यथा अगस्त्यसंहितायाम् __
परिचर्या पराः केचित् प्रासादेषु च शेरते ।
मनुष्यम् इव तं द्रष्टुं व्यावहर्तुं च बन्धुवत् ॥ १९२ ॥

अथ आत्मनिवेदनं यथा एकादशे 11.29.34 __
मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।
तदामृतत्वं प्रतिपद्यमानो
मयात्मभुयाया च कल्पते वै ॥ १९४ ॥

अर्थो द्विधात्मशब्दस्य पण्डितैर् उपपायते ।
देह्यहन्तास्पदं कैश्चिद् देहः कैश्चिन् ममत्वभाक् ॥ १९५ ॥

तत्र देही यथा यामुनाचार्यस्तोत्रे 49 __
वपुरादिषु योऽपि कोऽपि वा
गुणतो ऽसानि यथा तथाविधः ।
तद् अयं तव पादपद्मयोर्
अहम् अद्यैव मया समर्पितः ॥ १९६ ॥

देहो यथा भक्तिविवेके __
चिन्तां कुर्यान् न रक्षायै विक्रीतस्य यथा पशोः ।
तथार्पयन् हरौ देहं विरमेद् अस्य रक्षनात् ॥ १९७ ॥

दुष्करत्वेन विरले द्वे सख्यात्मनिवेदने ।
केषांचिद् एव धीराणां लभते साधनार्हताम् ॥ १९८ ॥

अथ निजप्रियोपहरणं यथा एकादशे 11.11.41 __
यद् यद् इष्टतमं लोके यच् चातिप्रियम् आत्मनः ।
तत् तन् निवेदयेन् मह्यं तद् आनन्त्याय कल्पते ॥ १९९ ॥

अथ तदर्थे ऽखिलचेष्टितं यथा पञ्चरात्रे __
लौकिकी वैदिकी वापि या क्रिया क्रियते मुने ।
हरिसेवानुकूलैव सा कार्या भक्तिम् इच्छता ॥ २०० ॥

अथ शरणापत्तिः यथा हरिभक्तिविलासे 11.677 __
तवास्मीति वदन् वाचा तथैव मनसा विदन् ।
तत्स्थानम् आश्रितस् तन्वा मोदते शरणागतः ॥ २०१ ॥

श्रीनारसिंहे च __
त्वां प्रपन्नो ऽस्मि शरणं देवदेव जनार्दन ।
इति यः शरणं प्राप्तस् तं क्लेशाद् उद्धराम्य् अहम् ॥ २०२ ॥

५३ _ अथ तदीयानां सेवनम् । तुलास्यः यथा स्कान्दे __
या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुःपावनी
रोगाणाम् अभिवन्दिता निरसनी सिक्तान्तकत्रासिनी ।
प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता
न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥ २०३ ॥

तथा च तत्रैव __
दृष्ता स्पृष्टा तथा ध्याता कीर्तिता नमिता स्तुता ।
रोपिता सेविता नित्यं पूजिता तुलसी शुभा ॥ २०४ ॥
नवधा तुलसीं देवीं ये भजन्ति दिने दिने ।
युगकोटिसहस्राणि ते वसन्ति हरेर् गृहे ॥ २०५ ॥

५४ _ अथ शास्त्रस्य
शास्त्रम् अत्र समाख्यातं यद् भक्तिप्रतिपादकम् ॥ २०६ ॥

यथा स्कान्दे __
वैष्णवानि तु शास्त्राणी ये शृण्वन्ति पठन्ति च ।
धन्यास् ते मानवा लोके तेसां कृष्णः प्रसीदति ॥ २०७ ॥
वैष्णवानि तु शास्त्राणी ये ऽर्चयन्ति गृहे नराः ।
सर्वपापविनिर्मुक्ता भवन्ति सुरवन्दिताः ॥ २०८ ॥
तिष्ठते वैष्णवं शास्त्रं लिखितं यस्य मन्दिरे ।

तत्र नारायणो देवः स्वयं वसति नारद ॥ २०९ ॥

तथा श्रीभागवते द्वादशे 12.13.15 च __
सर्ववेदान्तसारं हि श्रीभागवतम् इष्यते ।
तद्रसामृततृप्तस्य नान्यत्र स्याद् रतिः क्वचित् ॥ २१० ॥

५५ _ अथ मथुरायाः यथा आदिवाराहे
मथुरां च परित्यज्य यो ऽन्यत्र कुरुते रतिम् ।
मूढो भ्रमति संसारे मोहिता मम मायया ॥ २११ ॥

ब्रह्माण्डे च __
त्रैलोक्यवर्तितीर्थानां सेवनाद् दुर्लभा हि या ।
परानन्दमयी सिद्धिर् मथुरास्पर्षमात्रतः ॥ २१२ ॥

श्रुता स्मृता कीर्तिता च वाञ्छिता प्रेक्षिता गता ।
स्पृष्टा श्रिता सेविता च मथुराभीष्टदा नृणाम् ।
इति ख्यातं पुराणेषु न विस्तारभियोच्यते ॥ २१३ ॥

५६ _ अथ वैष्णवानां सेवनं यथा पाद्मे 6.253.176 __
आराधनानां सर्वेषां विष्णोर् आराधनं परम् ।
तस्मात् परतरं देवि तदीयानां समर्चनम् ॥ २१४ ॥

तृतीये 3.7.19 च __
यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।
रतिरासो भवेत् तीव्रः पादयोर् व्यसनार्दनः ॥ २१५ ॥

स्कान्दे च __
शङ्खचक्राङ्कितततनुः शिरसा मञ्जरीधरः ।
गोपीचन्दनलिप्ताङ्गो दृष्तश् चेत् तदघं कुतः ॥ २१६ ॥

प्रथमे 1.19.33 च __
येषां संस्मरणात् पुंसां सद्यः शुद्ध्यन्ति वै गृहाः ।
किं पुनर् दर्शनस्पर्शपादशौचासनादिभिः ॥ २१७ ॥

आदीपुराणे __
ये मे भक्तजनाः पार्थ न मे भक्ताश् च ते जनाः ।
मद्भक्तानां च ये भक्तास् ते मे भक्ततमा मताः ॥ २१८ ॥

यावन्ति भगवद्भक्तेर् अङ्गानि कथितानीह ।
प्रायस् तावन्ति तद्भक्तभक्तेर् अपि बुधा विदुः ॥ २१९ ॥

५७ _ अथ यथावैभवमहोत्सवो यथा पाद्मे __
यः करोति महीपाल हरेर् गेहे महोत्सवम् ।
तस्यापि भवति नित्यं हरिलोके महोत्सव ॥ २२० ॥

५८ _ अथ ऊर्जादरो यथा पाद्मे __
यथा दामोदरो भक्तवत्सलो विदितो जनैः ।
तस्यायं तादृशो मासः स्वल्पम् अप्य् उरुकारकः ॥ २२१ ॥

तत्रापि मथुरायां विशेषो यथा तत्रैव __
भुक्तिं मुक्तिं हरिर् दद्याद् अर्चितो ऽन्यत्र सेविनाम् ।
भक्तिं तु न ददात्य् एव यतो वश्यकरी हरेः ॥ २२२ ॥
सा त्व् अञ्जसा हरेर् भक्तिर् लभ्यते कार्त्तिके नरैः ।
मथुरायां सकृद् अपि श्रीदामोदरसेवनात् ॥ २२३ ॥

५९ _ अथ श्रीजन्मदिनयात्रा यथा भविष्योत्तरे __
यस्मिन् दिने प्रसूतेयं देवकी त्वां जनार्दन ।
तद्दिनं ब्रूहि वैकुण्ठ कुर्मस् ते तत्र चोत्सवम् ।
तेन सम्यक्प्रपन्नानां प्रसादं कुरु केशवः ॥ २२४ ॥

६० _ अथ श्रीमूर्तेरन्घ्रिसेवने प्रीतिः यथा आदिपुराणे __
मम नामसदाग्राही मम सेवाप्रियः सदा ।
भक्तिस् तस्मै प्रदातव्या न तु मुक्तिः कदाचन ॥ २२५ ॥

६१ _ अथ श्रीभागवतार्थास्वादो यथा प्रथमे 1.1.3 __
निगमकल्पतरोर्गलितं फलं
शुकमुखाद् अमृतद्रवसंयुतम् ।
पिबत भागवतं रसम् आलयं
मुहुर् अहो रसिका भुवि भावुकाः ॥ २२६ ॥

तथा द्वितीये 2.1.9 च __
परिनिष्ठितो ऽपि नैर्गुण्ये उत्तमःश्लोकलीलया ।
गृहितचेता राजर्षे आख्यानं यद् अधीतवान् ॥ २२७ ॥

६२ _ अथ सजातीयाशयस्निग्धश्रीभगवद्भक्तसङ्गो यथा प्रथमे 1.18.13 __
तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ २२८ ॥

हरिभक्तिसुधोदये च __

यस्य यत्सङ्गतिः पुंसो मणिवत् स्यात् स तद्गुणः।
स्वकूलर्द्ध्यै ततो धीमान् स्वयूथ्यान् एव संश्रयेत्॥ २२९॥

६३ _ अथ श्रीनाम संकीर्तनं यथा द्वितीये 2.1.11
एतन् निर्विद्यमानानाम् इच्छताम् अकुतोभयम्।
योगिनां नृप निर्णीतं हरेर् नामानुकीर्तनं॥ २३०॥

आदिपुराणे च __
गीत्वा च मम नामानि विचरेन् मम सन्निधौ।
इति ब्रवीमि ते सत्यं क्रीतो ऽहं तस्य चार्जुन॥ २३१॥

पाद्मे च __
येन जन्मसहस्राणि वासुदेवो निषेवितः।
तन्मुखे हरिनामानि सदा तिष्ठन्ति भारत॥ २३२॥

यतस् तत्रैव च __
नाम चिन्तामणिः कृष्णश् चैतन्यरसविग्रहः।
पूर्णः शुद्धो नित्यमुक्तो ऽभिन्नत्वान् नामनामिनोः॥ २३३॥

अतः श्रीकृष्णनामादि न भवेद् ग्राह्यं इन्द्रियैः।
सेवोन्मुखे हि जिह्वादौ स्वयम् एव स्फुरत्य् अदः॥ २३४॥

६४ _ अथ श्रीमथुरामण्डले स्थितिः यथा पाद्मे __
अन्येषु पुण्यतीर्थेषु मुक्तिर् एव महाफलम्।
मुक्तैः प्रार्थ्या हरेर् भक्तिर् मथुरायां तु लभ्यते॥ २३५॥
त्रिवर्गदा कामिनां या मुमुक्षूणां च मोक्षदा।
भक्तीच्छोर् भक्तिदा कस् तां मथुरां नाश्रयेद् बुधः॥ २३६॥
अहो मधुपुरी धन्या वैकुण्ठाच् च गरीयसी।
दिनम् एकं निवासेन हरौ भक्तिः प्रजायते॥ २३७॥

दुरूहाद्भुतवीर्ये ऽस्मिन् श्रद्धा दूरे ऽस्तु पञ्चके।
यत्र स्वल्पो ऽपि सम्बन्धः सद्धियां भावजन्मने॥ २३८॥

तत्र श्रीमुर्तिः यथा __
स्मेरां भङ्गीत्रयपरिचितां साचिविस्तीर्णदृष्टिं
वंशीन्यस्ताधरकिशलयाम् उज्ज्वलां चन्द्रकेण।
गोविन्दाख्यां हरितनुम् इतः केशितीर्थोपन्कण्ठे
मा प्रेक्षिष्ठास् तव यदि सखे बन्धुसन्गे ऽस्ति रङ्गः॥ २३९॥

श्रीभागवतं यथा __
शङ्के नीताः सपदि दशमस्कन्धपद्यावलीनां
वर्णाः कर्णाध्वनि पथि कतामानुपुर्व्याद् भवद्भिः।
हंहो दिम्भाः परमशुभदान् हन्त धर्मार्थकामान्
यद् गर्हन्तः सुखमयम् अमी मोक्षम् अप्य् आक्षिपन्ति॥ २४०॥

कृष्णभक्तो यथा __
दृगम्भोभिर् धौतः पुलकपतली मण्डिततनुः
स्खलन्न् अन्तःफुल्लो दधद् अतिपृथुं वेपथुम् अपि।
दृशोः कक्षां यावन् मम स पुरुषः को ऽप्य् उपययौ
न जाते किं तावन् मतिर् इह गृहे नाभिरमते॥ २४१॥

नाम यथा __
यदवधि मम शीता वैणिकेनानुगीता
श्रुतिपथम् अघशत्रोर् नामागाथा प्रयाता।
अनवकलितपूर्वां हन्त काम् अप्य् अवस्थां
तदवधि दधदन्तर्मानसं शाम्यतीव॥ २४२॥

श्री मथुरामण्डलं यथा
तटभुवि कृतकान्तिः श्यामला यास् तटिन्याः
स्फुटितनवकदम्बालम्बिकूजद्द्विरेफा।
निरवधिमधुरिम्णा मण्डितेयं कथं मे
मनसि कम् अपि भावं काननश्रीस् तनोति॥ २४३॥

अलौकिकपदार्थानाम् अचिन्त्या शक्तिर् ईदृशी।
भावं तद्विषयं चापि या सहैव प्रकाशयेत्॥ २४४॥
केषांचित् क्वचिद् अज्ञानां यत् क्षुद्रं श्रूयते फलं।
बहिर्मुखप्रवृत्त्यैतत् किन्तु मुख्यं फलं रतिः॥ २४५॥
संमतं भक्तिविज्ञानां भक्त्यङ्गत्वं न कर्मणाम्॥ २४६॥

यथ चैकादशे 11.20.9
तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन् न जायते॥ २४७॥

ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता।
ईषत् प्रथमम् एवेति नाङ्गत्वम् उचितं तयोः॥ २४८॥
यद् उभे चित्तकाठिन्यहेतू प्रायः सतां मते।
सुकुमारस्वभावेयं भक्तिस् तद्धेतुर् ईरिता॥ २४९॥

यथा तत्रैव 11.20.31 __
तस्मान् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।

न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेद् इह ॥ २५० ॥

किन्तु ज्ञानविरक्त्यादिसाध्यं भक्त्यैव सिध्यति ॥ २५१ ॥

यथा तत्रैव 11.20.3233 __
यत् कर्मभिर् यत् तपसा ज्ञानवैराग्य तश् च यत् ।
योगेन दान धर्मेण श्रेयोभिर् इतरैर् अपि ॥ २५२ ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभते ऽन्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति ॥ २५३ ॥

रुचिम् उद्वहतस् तत्र जनस्य भजने हरेः ।
विषयेषु गरिष्ठो ऽपि रागः प्रायो विलीयते ॥ २५४ ॥
अनासक्तस्य विषयान् यथार्हम् उपयुञ्जतः ।
निर्बन्धः कृष्णसम्बन्धे युक्तं वैराग्यम् उच्यते ॥ २५५ ॥
प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः ।
मुमुक्षुभिः परित्यागो वैराग्यं फल्गु कथ्यते ॥ २५६ ॥
प्रोक्तेन लक्षणेनैव भक्तिर् अधिकृतस्य च ।
अङ्गत्वे सुनिरस्ते ऽपि नित्याद्यखिलकर्मणां ॥ २५७ ॥
ज्नानस्याध्यात्मिकस्यापि वैरग्यस्य च फल्गुनः ।
स्पष्टतार्थं पुनर् अपि तद् एवेदं निराकृतं ॥ २५८ ॥
धनशिष्यादिभिर् द्वारैर् या भक्तिर् उपपाद्यते ।
विदूरत्वाद् उत्तमताहान्या तस्याश् च नाङ्गता ॥ २५९ ॥
विशेषणत्वम् एवैषां संश्रयन्त्य् अधिकारिणाम् ।
विवेकादीन्य् अतो ऽमीषाम् अपि नाङ्गत्वम् उच्यते ॥ २६० ॥
कृष्णोन्मुखं स्वयं यान्ति यमाः शौचादयस् तथा ।
इत्य् एषां च न युक्ता स्याद् भक्त्यङ्गान्तरपातिता ॥ २६१ ॥

यथा स्कान्दे __
एते न ह्य् अद्भुता व्याध तवाहिंसादयो गुणाः ।
हरिभक्तौ प्रवृत्ता ये न ते स्युः परतापिनः ॥ २६२ ॥

तत्रैव __
अन्तःशुद्धिर् बहिःशुद्धिस् तपःशान्त्यदयस् तथा ।
अमी गुणाः प्रपद्यन्ते हरिसेवाभिकामिनाम् ॥ २६३ ॥

सा भक्तिर् एकमुख्याण्गाश्रितानैकाङ्गि काथ वा ।
स्ववासनानुसारेण निष्ठातः सिद्धिकृद् भवेत् ॥ २६४ ॥

तत्र एकाङ्गा यथा ग्रन्थान्तरे __
श्री विष्णोः श्रवणे परीक्षिद् अभवद् वैयासकिः कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मीः पृथुः पूजने ।
अक्रूरस् त्व् अभिवन्दने कपिपतिर् दास्ये ऽथ सख्ये ऽर्जुनः
सर्वस्वात्मनिवेदने बलिर् अभूत् कृष्णाप्तिर् एषां परा ॥ २६५ ॥

अनेकाङ्गा यथा नवमे 9.4.1820 __
स वै मनः कृष्णपदारविन्दयोर् वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर् मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ २६६ ॥
मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शे ऽङ्गसङ्गमं ।
घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ २६७ ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया यथोत्तमःश्लोकजनाश्रय रतिः ॥
२६८ ॥

शास्त्रोक्तया प्रबलया तत्तन्मर्याद यान्विता ।
वैधि भक्तिर् इयं कैश्चन् मर्यादामार्ग उच्यते ॥ २६९ ॥

अथ रागानुगा _
विराजन्तीम् अभिव्यक्तां व्रजवासी जनादिषु ।
रागात्मिकाम् अनुसृता या सा रागानुगोच्यते ॥ २७० ॥
रागानुगाविवेकार्थम् आदौ रागात्मिकोच्यते ॥ २७१ ॥
इष्टे स्वारसिकी रागः परमाविष्टता भवेत् ।
तन्मयी या भवेद् भक्तिः सात्र रागात्मिकोदिता ॥ २७२ ॥
सा कामरूपा सम्बन्धरूपा चेति भवेद् द्विधा ॥ २७३ ॥

तथा हि सप्तमे 7.1.2930 __
कामाद् द्वेषाद् भयात् स्नेहाद् यथा भक्त्येश्वरे मनः ।
आवेश्य तद् अघं हित्वा बहवस् तद्गतिं गताः ॥ २७४ ॥
गोप्यः कामाद् भयात् कंसो द्वेषाच् चैद्यादयो नृपाः ।
सम्बन्धाद् वृष्णयः स्नेहाद् यूयं भक्त्या वयं विभो ॥ २७५ ॥ इति ॥

आनुकूल्यविपर्यासाद् भीतिद्वेषौ पराहतौ ।
स्नेहस्य सख्यवाचित्वाद् वैधभक्त्यनुवर्तिता ॥ २७६ ॥
किं वा प्रेमाभिधायित्वान् नोपयोगोऽत्र साधने ।
भक्त्या वयम् इति व्यक्तं वैधी भक्तिर् उदीरिता ॥ २७७ ॥
यदरीणां प्रियाणां च प्राप्यम् एकम् इवोदितम् ।
तद् ब्रह्मकृष्णयोर् ऐक्यात् किरणार्कोपमाजुषोः ॥ २७८ ॥
ब्रह्मण्य् एव लयं यान्ति प्रायेण रिपवो हरेः ।
केचित् प्राप्यापि सारूप्याभासं मज्जन्ति तत्सुखे ॥ २७९ ॥

तथा च ब्रह्माण्ड पुराणे _

सिद्धलोकस् तु तमसः पारे यत्र वसन्ति हि ।
सिद्धा ब्रह्मसुखे मग्ना दैत्याश् च हरिण हताः ॥ २८० ॥

रागबन्धेन केनापि तं भजन्तो व्रजन्त्य् अमी ।
अङ्घ्रिपद्मसुधाः प्रेमरूपास् तस्य प्रिया जनाः ॥ २८१ ॥

तथा हि श्रीदशमे 10.87.23 _
निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्
मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो
वयम् अपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २८२ ॥

तत्र कामरूपा _
सा कामरूपा सम्भोगतृष्णां या नयति स्वताम् ।
यद् अस्यां कृष्णसौख्यार्थम् एव केवलम् उद्यमः ॥ २८३ ॥
इयं तु व्रजदेवीषु सुप्रसिद्धा विराजते ।
आसां प्रेमविशेषोऽयं प्राप्तः काम् अपि माधुरीं ।
तत्तत्क्रीडानिदानत्वात् काम इत्य् उच्यते बुधैः ॥ २८४ ॥

तथा च तन्त्रे _
प्रेमैव गोपरामाणां काम इत्य् अगमत् प्रथाम् ॥ २८५ ॥

इत्य् उद्धवादयोऽप्य् एतं वाञ्छति भगवत्प्रियाः ॥ २८६ ॥
कामप्राया रतिः किन्तु कुब्जायाम् एव सम्मता ॥ २८७ ॥

तत्र सम्बन्धरूपा _
सम्बन्धरूपा गोविन्दे पितृत्वाद्याभिमानिता ।
अत्रोपलक्षणतया वृष्णीनां वल्लवा मताः ।
यदैश्यज्ञानशून्यत्वाद् एषां रागे प्रधानता ॥ २८८ ॥
कामसम्बन्धरूपे ते प्रेममात्रस्वरूपके ।
नित्यसिद्धाश्रयतया नात्र सम्यग् विचारिते ॥ २८९ ॥
रागात्मिकाया द्वैविध्याद् द्विधा रागानुगा च सा ।
कामानुगा च सम्बन्धानुगा चेति निगद्यते ॥ २९० ॥

तत्र अधिकारी _
रागात्मिकाकनिष्ठा ये व्रजवासिजनादयः ।
तेषां भावाप्तये लुब्धो भवेद् अत्राधिकारवान् ॥ २९१ ॥
तत्तद्भावादिमाधुर्ये श्रुते धीर् यद् अपेक्षते ।
नात्र शास्त्रं न युक्तिं च तल्लोभोत्पत्तिलक्षणं ॥ २९२ ॥
वैधभक्त्यधिकारी तु भावाविर्भवनावधि ।
अत्र शास्त्रं तथा तर्कम् अनुकूलम् अपेक्षते ॥ २९३ ॥
कृष्णं स्मरन् जनं चास्य प्रेष्ठं निजसमीहितम् ।
तत्तत्कथारतश् चासौ कुर्याद् वासं व्रजे सदा ॥ २९४ ॥
सेवा साधकरूपेण सिद्धरूपेण चात्र हि ।
तद्भावलिप्सुना कार्या व्रजलोकानुसारतः ॥ २९५ ॥
श्रवणोत्कीर्तनादीनि वैधभक्त्युदितानि तु ।
यान्य् अङ्गानि च तान्य् अत्र विज्ञेयानि मनीषिभिः ॥ २९६ ॥

तत्र कामानुगा _
कामानुगा भवेत् तृष्णा कामरूपानुगामिनी ॥ २९७ ॥
सम्भोगेच्छामयी तत्तद्भावेच्छात्मेति सा द्विधा ॥ २९८ ॥
केलितात्पर्यवत्य् एव सम्भोगेच्छामयी भवेत् ।
तद्भावेच्छात्मिका तासाम् भावमाधुर्यकामिता ॥ २९९ ॥
श्रीमूर्तेर् माधुरीं प्रेक्ष्य तत्तल्लीलां निशम्य वा ।
तद्भावाकाङ्क्षिणो ये स्युस् तेषु साधनतानयोः ।
पुराणे श्रूयते पाद्मे पुंसम् अपि भवेद् इयम् ॥ ३०० ॥

यथा _
पुरा महर्षयः सर्वे दण्डकारण्यवासिनः ।
दृष्ट्वा रामं हरिं तत्र भोक्तुम् ऐच्छन् सुविग्रहम् ॥ ३०१ ॥
ते सर्वे स्त्रीत्वम् आपन्नाः समुद्भूताश् च गोकुले ।
हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात् ॥ ३०२ ॥

रिरंसां सुष्ठु कुर्वन् यो विधिमार्गेण सेवते ।
केवलेनैव स तदा महिषीत्वम् इयात् पुरे ॥ ३०३ ॥

तथा च महाकौर्मे _
अग्निपुत्रा महात्मानस् तपसा स्त्रीत्वम् आपिरे ।
भर्तारं च जगद्योनिं वासुदेवम् अजं विभुम् ॥ ३०४ ॥

अथ सम्बन्धानुगा __
सा सम्बन्धानुगा भक्तिः प्रोच्यते सद्भिर् आत्मनि ।
या पितृत्वादिसम्बन्धमननारोपनात्मिका ॥ ३०५ ॥
लुब्धैर् वात्सल्यसख्यादौ भक्तिः कार्यात्र साधकैः ।
व्रजेन्द्रसुबलादीनां भावचेष्टितमुद्रया ॥ ३०६ ॥
तथा हि श्रूयते शास्त्रे कश्चित् कुरुपुरीस्थितः ।
नन्दसूनोर् अधिष्ठानं तत्र पुत्रतया भजन् ।
नारदस्योपदेशेन सिद्धोऽभूद् वृद्धवर्धकिः ॥ ३०७ ॥

अतव नारायणव्यूहस्तवे _

पतिपुत्रसुहृद्भ्रातृपितृवन् मैत्रवद् धरिम्।
ये ध्यायन्ति सदोद्युक्तास् तेभ्योऽपीह नमो नमः॥ ३०८॥

कृष्णतद्भक्तकारुण्यमात्रलाभैकहेतुका।
पुष्टिमार्गतया कैश्चिद् इयं रागानुगोच्यते॥ ३०९॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पुर्वविभागे साधनभक्तिलहरीद्विितिया॥

अथ भावः

शुद्धसत्त्वविशेषात्मा प्रेमसूर्यांशुसाम्यभाक्।
रुचिभिश् चित्तमासृण्यकृद् असौ भाव उच्यते॥ १॥

तथा हि तन्त्रे __
प्रेम्णस् तु प्रथमावस्था भाव इत्य् अभिधीयते।
सात्त्विकाः स्वल्पमात्राः स्युर् अत्राश्रुपुलकादयः॥ २॥

स यथा पद्मपुराणे __
ध्यायं ध्यायं भगवतः पादाम्बुजयुगं तदा।
ईषद्विक्रियमाणात्मा सार्द्रदृष्टिर् अभूद् असौ॥ ३॥

आविर्भूय मनोवृत्तौ व्रजन्ति तत्स्वरूपतां।
स्वयंप्रकाशरूपापि भासमाना प्राकाश्यवत्॥ ४॥
वस्तुतः स्वयम् आस्वादस्वरूपैव रतिस् त्व् असौ।
कृष्णादिकर्मकास्वादहेतुत्वं प्रतिपद्यते॥ ५॥
साधनाभिनिवेशेन कृष्णतद्भक्तयोस् तथा।
प्रसादेनातिधन्यानां भावो द्वेधाभिजायते।
आद्यस् तु प्रायिकस् तत्र द्वितीयो विरलोदयः॥ ६॥

तत्र साधनाभिनिवेशजः
वैधीरागानुगामार्गभेदेन परिकीर्तितः।
द्विविधः खलु भावोऽत्र साधनाभिनिवेशजः॥ ७॥
साधनाभिनिवेशस् तु तत्र निष्पादयन् रुचिम्।
हराव् आसक्तिम् उत्पाद्य रतिं संजनयत्य् असौ॥ ८॥

तत्र आद्यो 1.5.26 __
तत्रान्वहं कृष्णकथाः प्रगायताम्
अनुग्रहेणाशृणवं मनोहराः।
ताः श्रद्धया मे ऽनुपदं विशृण्वतः
प्रियश्रवस्य् अङ्ग ममाभवद् रतिः॥ ९॥ इति।

रत्या तु भाव एवात्र न तु प्रेमाभिधीयते।
मम भक्तिः प्रवृत्तेति वक्ष्यते स यद् अग्रतः॥ १०॥

यथा तत्रैव 1.5.28 __
इत्थं शरत्प्रावृषिकाव् ऋतू हरेर्
विशृण्वतो मे ऽनुसवं यशो ऽमलम्।
सङ्कीर्त्यमानं मुनिभिर् महात्मभिर्
भक्तिः प्रवृत्तात्म रजस्तमोपहा॥ ११॥

तृतीये च 3.25.25 __
सतां प्रसङ्गान् मम वीर्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणाद् आश्व् अपवर्गवर्त्मनि
श्रद्धा रतिर् भक्तिर् अनुक्रमिष्यति॥ १२॥

पुराणे नाट्यशास्त्रे च द्वयोस् तु रतिभावयोः।
समानार्थतया ह्य् अत्र द्वयम् ऐक्येन लक्षितम्॥ १३॥

द्वितीयो यथा पाद्मे __
इत्थं मनोरथं बाला कुर्वती नृत्य उत्सुका।
हरिप्रीत्या च तां सर्वां रात्रिम् एवात्यवाहयत्॥ १४॥

अथ श्रिकृष्णतद्भक्तप्रसादजः
साधनेन विना यस् तु सहसैवाभिजायते।
स भावः कृष्णतद्भक्तप्रसादज इतीयते॥ १५॥

अथ श्रीकृष्णप्रसादजः __
प्रसादा वाचिकालोकदानहार्दादयो हरेः॥ १६॥

तत्र वाचिकप्रसादजः यथा नारदीये __
सर्वमण्गलमूर्धन्या पूर्णानन्दमयी सदा।
द्विजेन्द्र तव मय्य् अस्तु भक्तिर् अव्याभिचारिणी॥ १७॥

आलोकदानजः यथा स्कान्दे __
अदृष्टपूर्वम् आलोक्य कृष्णं जाङ्गलवासिनः।
विक्लिद्यदन्तरात्मनो दृष्टिं नाक्रष्टुम् ईशिरे॥ १८॥

हार्दः __

प्रसाद आन्तरो यः स्यात् स हार्द इति कथ्यते ॥ १९॥

यथा शुकसंहितायां __
महाभागवतो जातः पुत्रस् ते बादरायण ।
विनोपायैर् उपेयाभूद् विष्णुभक्तिर् इहोदिता ॥ २० ॥

अथ तद्भक्तप्रसादजः यथा सप्तमे 7.4.36
गुणैर् अलम् असङ्ख्येयैर् महात्म्यं तस्य सूच्यते ।
वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ २१ ॥

नारदस्य प्रसादेन प्रह्लादे शुधवासना ।
निसर्गः सैव तेनात्र रतिर् नैसर्गिकी मता ॥ २२ ॥

स्कान्दे च __
अहो धन्यो ऽसि देवर्षे कृपया यस्य तत्क्षणात् ।
नीचो ऽप्य् उत्पुलको लेभे लुब्धको रतिम् अच्युते ॥ २३ ॥

भक्तानां भेदतः सेयं रतिः पञ्चविधा मता ।
अग्रे विविच्य वक्तव्या तेन नात्र प्रपञ्च्यते ॥ २४ ॥
क्षान्तिर् अव्यार्थकालत्वं विरक्तिर् मानशुन्यता ।
आशाबन्धः समुत्कण्ठा नामगाने सदा रुचिः ॥ २५ ॥
आसक्तिस् तद्गुणाख्याने प्रीतिस् तद्वसतिस्थले ।
इत्य् आदयो ऽनुभावाः स्युर् जातभावाङ्कुरे जने ॥ २६ ॥

तत्र क्षान्तिः __
क्षोभहेताव् अपि प्राप्ते क्षान्तिर् अक्षुभितात्मता ॥ २७ ॥

यथा प्रथमे 1.19.15 __
तं मोपयातं प्रतियन्तु विप्रा
गङ्गा च देवी धृतचित्तम् ईशे ।
द्विजोपसृष्टः कुहकस् तक्षको वा
दशत्व् अलं गायत विष्णुगाथाः ॥ २८ ॥

अथ अव्यार्थकालत्वं यथा हरिभक्तिसुधोदये
वाग्भिः स्तुवन्तो मनसा स्मरन्तस्
तन्वा नमन्तो ऽप्य् अनिशं न तृप्ताः ।
भक्ताः स्रवन्नेत्रजलाः समग्रम्
आयुर् हरेर् एव समर्पयन्ति ॥ २९ ॥

अथ विरक्तिः __
विरक्तिर् इन्द्रियार्थानां स्याद् अरोचकता स्वयं ॥ ३० ॥

यथा पञ्चमे 5.14.43 __
यो दुस्त्यजान् दारसुतान् सुहृद् राज्यं हृदिस्पृशः ।
जहौ युवैव मलवद् उत्तमःश्लोकलालसः ॥ ३१ ॥

अथ मानशून्यता __
उत्कृष्टत्वे ऽप्य् अमानित्वं कथिता मानशून्यता ॥ ३२ ॥

यथा पाद्मे __
हरौ रतिं वहन्न् एष नरेन्द्राणां शिखामणिः ।
भिक्षाम् अटन्न् अरिपुरे श्वपाकम् अपि वन्दते ॥ ३३ ॥

अथ आशाबन्धः __
आशाबन्धो भगवतः प्राप्तिसम्भावना दृढा ॥ ३४ ॥

यथा श्रीमत्प्रभुपादानां __
न प्रेमा श्रवणादिभक्तिर् अपि वा योगो ऽथवा वैष्णवो
ज्ञानं वा शुभकर्म वा कियद् अहो सज्जातिर् अप्य् अस्ति वा ।
हीनार्थाधिकसाधके त्वयि तथाप्य् अच्छेद्यमूला सती
हे गोपीजनवल्लभ व्यथयते हा हा मदाशैव माम् ॥ ३५ ॥

अथ समुत्कण्ठा __
समुत्कण्ठा निजाभीष्टलाभाय गुरुलुब्धता ॥ ३६ ॥

अथ कृष्णकर्णामृते 54 __
आनम्राम् असितभ्रुवोर् उपचितम् अक्षीणपक्ष्माङ्कुरेष्व्
आलोलाम् अनुरागिणोर् नयनयोर् आर्द्रां मृदौ जल्पिते ।
आताम्राम् अधरामृते मदकलाम् अम्लान वंशीस्वनेष्व्
आशास्ते मम लोचनं व्रजशिशोर्मूर्तिं जगन्मोहिनीम् ॥ ३७ ॥

अथ नामगाने सदा रुचिः यथा __
रोदनबिन्दुमरन्दस्यन्दिदृगिन्दीवराद्य गोविन्द ।
तव मधुरस्वरकण्ठी गायति नामावलीं बाला ॥ ३८ ॥

तद्गुणाख्याने आसाक्तिः यथा कृष्णकर्णामृते 88 __
माधुर्याद् अपि मधुरं
मन्मथता तस्य किम् अपि कैशोरम् ।
चपल्याद् अपि चपलं
चेतो बत हरति हन्त किं कुर्मः ॥ ३९॥

तद् वसतिस्थले प्रीतिः यथा पद्यावल्याम्१ __
अत्रासीत् किल नन्दसद्म शकटस्यात्राभवद् भञ्जनं
बन्धच्छेदकरो ऽपि दामभिर् अभूद् बद्धो ऽत्र दामोदरः।
इत्थं माथुरवृद्धवक्त्रविगलत्पीयूषधारां पिबन्न्
आनन्दाश्रुधरः कदा मधुपुरीं धन्यश् चरिष्याम्य् अहम्॥ ४०॥

अपि च __
व्यक्तं मसृणितेवान्तर् लक्ष्यते रतिलक्षणम्।
मुमुक्षुप्रभृतीनां चेद् भवेद् एषा रतिर् न हि॥ ४१॥
विमुक्ताखिलतर्षैर् या मुक्तिर् अपि विमृग्यते।
या कृष्णेनातिगोप्याशु भजद्भ्यो ऽपि न दीयते॥ ४२॥
सा भुक्तिमुक्तिकामत्वाच् छुद्धां भक्तिम् अकुर्वताम्।
हृदये सम्भवत्य् एषां कथं भागवती रतिः॥ ४३॥
किन्तु बालचमत्कारकरी तच्चिह्नवीक्षया।
अभिज्ञेन सुबोधो ऽयं रत्याभासः प्रकीर्तितः॥ ४४॥
प्रतिबिम्बस् तथा च्छाया रत्याभासो द्विधा मतः॥ ४५॥

तत्र प्रतिबिम्बः __
अश्रमाभीष्टनिर्वाही रतिलक्षणलक्षितः।
भोगापवर्गसौख्यांशव्यञ्जकः प्रतिबिम्बकः॥ ४६॥
दैवात् सद्भक्तसङ्गेन कीर्तनाद्यनुसारिणाम्।
प्रायः प्रसन्नमनसां भोगमोक्षादि रागिणाम्॥ ४७॥
केषांचित् हृदि भावेन्दोः प्रतिबिम्ब उदञ्चति।
तद्भक्तहृन्नभःस्थस्य तत्संसर्गप्रभावतः॥ ४८॥

अथ छाया __
क्षुद्रकौतूहलमयी चञ्चला दुःखहारिणी।
रतेश् छाया भवेत् किंचित् तत्सादृश्यावलम्बिनी॥ ४९॥
हरिप्रियक्रियाकालदेशपात्रादिसङ्गमात्।
अप्य् आनुषङ्गिकाद् एष क्वचिद् अज्ञेष्व् अपीक्ष्यते॥ ५०॥
किन्तु भाग्यं विना नासौ भावच्छायाप्य् उदञ्चति।
यद् अभ्युदयतः क्षेमं तत्र स्याद् उत्तरोत्तरम्॥ ५१॥
हरिप्रियजनस्यैव प्रसादभरलाभतः।
भावाभासो ऽपि सहसा भावत्वम् उपगच्छति॥ ५२॥
तस्मिन्न् एवापराधेन भावाभासो ऽप्य् अनुत्तमः।
क्रमेण क्षयम् आप्नोति खस्थः पूर्णशशी यथा॥ ५३॥

किं च __
भावो ऽप्य् अभावम् आयाति कृष्णप्रेष्ठापराधतः।
आभासतां च शनकैर् न्यूनजातीयताम् अपि॥ ५४॥
गाढासङ्गात् सदायाति मुमुक्षौ सुप्रतिष्ठिते।
आभासताम् असौ किंवा भजनीयेशभावताम्॥ ५५॥
अतव क्वचित् तेषु नव्यभक्तेषु दृश्यते।
क्षणम् ईश्वरभावो ऽयं नृत्यादौ मुक्तिपक्षगः॥ ५६॥
साधनेक्षां विना यस्मिन्न् अकस्माद् भाव ईक्ष्यते।
विघ्नस्थगितम् अत्रोह्यं प्राग्भवीयं सुसाधनं॥ ५७॥
लोकोत्तरचमत्कारकारकः सर्वशक्तिदः।
यः प्रथीयान् भवेद् भावः स तु कृष्णप्रसादजः॥ ५८॥
जने चेज् जातभावे ऽपि वैगुण्यम् इव दृश्यते।
कार्या तथापि नासूया कृतार्थः सर्वथैव सः॥ ५९॥

यथा नारसिंहे __
भगवति च हराव् अनन्यचेता
भृशम् अलिनो ऽपि विराजते मनुष्यः।
न हि शशकलुषच्छविः कदाचित्
तिमिरपराभवताम् उपैति चन्द्रः॥ ६०॥

रतिर् अनिशनिसर्गोष्णप्रबलतरानन्दपूररूपैव।
उष्माणम् अपि वमन्ती सुधांशुकोटेर् अपि स्वाद्वी॥ ६१॥

इति श्रीश्री भक्तिरसामृतसिन्धौ
पुर्वविभागे भावभक्तिलहरी तृतीया॥

अथ प्रेमा

सम्यङ्मसृणितस्वान्तो ममत्वातिशयाङ्कितः।
भावः स एव सान्द्रात्मा बुधैः प्रेमा निगद्यते॥ १॥

यथा पञ्चरात्रे
अनन्यममता विष्णौ ममता प्रेमसङ्गता।
भक्तिर् इत्य् उच्यते भीष्मप्रह्लादोद्धवनारदैः॥ २॥

भक्तिः प्रेमोच्यते भीष्ममुख्यैर् यत्र तु सङ्गता।
ममतान्यममत्वेन वर्जितेत्य् अत्र योजना॥ ३॥
भावोत्थो ऽतिप्रसादोत्थः श्रीहरेर् इति स द्विधा॥ ४॥

तत्र भावोत्थः __
भाव एवान्तरङ्गाणमङ्गानामनुसेवया।
आरूढः परमौत्कर्षम् भावोत्तः परिकीर्तितः॥ ५॥

तत्र वैधभावोत्थो यथैकादशे 11.2.40
एवंव्रतः स्वप्रियनामकीर्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्य् अथो रोदिति रौति गायत्य्
उन्मादवन् नृत्यति लोकबाह्यः ॥ ६ ॥

रागानुगीयभावोत्थो यथा पाद्मे
न पतिं कामयेत् कञ्चिद् ब्रह्मचर्यस्थिता सदा ।
तमेव मूर्तिं ध्यायन्ती चन्द्रकन्तिर्वरानना ॥ ७ ॥
श्रीकृष्णगाथां गायन्ती रोमाण्चोद्भेदलक्षणा ।
अस्मिन्मन्वन्तरे स्निग्धा श्रीकृष्णप्रियवर्तया ॥ ८ ॥

अथ हरेर् अतिप्रसादोत्थः __
हरेर् अतिप्रसादो ऽयं सङ्गदानादिर् आत्मनः ॥ ९ ॥

यथैकादशे 11.12.7 __
ते नाधीतश्रुतिगणा नोपासितमहत्तमाः ।
अव्रतातप्ततपसः मत्सङ्गान् माम् उपागताः ॥ १० ॥

माहात्म्यज्ञानयुक्तश् च केवलश् चेति स द्विधा ॥ ११ ॥

अथ आद्यो यथा पञ्चरात्रे __
माहात्म्यज्ञानयुक्तस् तु सुदृढः सर्वतो ऽधिकः ।
स्नेहो भक्तिर् इति प्रोक्तस् तया साष्ट्यादिनान्यथा ॥ १२ ॥

केवलो यथा तत्रैव __
मनोगतिर् अविच्छिन्ना हरौ प्रेमपरिप्लुता ।
अभिसन्धिविनिर्मुक्ता भक्तिर्विष्णुवशङ्करी ॥ १३ ॥ इति ।

महिमज्ञानयुक्तः स्याद् विधिमार्गानुसारिणाम् ।
रागानुगाश्रितानां तु प्रायशः केवलो भवेत् ॥ १४ ॥

आदौ श्रद्धा ततः साधुसङ्गो ऽथ भजनक्रिया ।
ततो ऽनर्थनिवृत्तिः स्यात् ततो निष्ठा रुचिस् ततः ॥ १५ ॥
अथासक्तिस् ततो भावस् ततः प्रेमाभ्युदञ्चति ।
साधकानाम् अयं प्रेम्नः प्रादुर्भावे भवेत् क्रमः ॥ १६ ॥
धन्यस्यायं नवः प्रेमा यस्योन्मीलति चेतसि ।
अन्तर्वाणीभिर् अप्य् अस्य मुद्रा सुष्ठु सुदुर्गमा ॥ १७ ॥

अतव श्रीनारदपञ्चरात्रे यथा __
भावोन्मत्तो हरेः किञ्चिन् न वेद सुखम् आत्मनः ।
दुखं चेति महेशानि परमानन्द आप्लुतः ॥ १८ ॥

प्रेम्ण एव विलासत्वाद् वैरल्यात् साधकेष्व् अपि ।
अत्र स्नेहादयो भेदा विविच्य न हि शंसिताः ॥ १९ ॥

श्रीमत्प्रभुपदाम्भोजैः सर्वा भागवतामृते ।
व्यक्तीकृतास्ति गूढापि भक्तिसिद्धान्तमाधुरी ॥ २० ॥
गोपालरूपशोभां दधद् अपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनात्मा प्रथमविभागे सुधाम्बुनिधेः ॥ २१ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पूर्वविभागे प्रेमभक्तिलहरीचतुर्थी

इति श्रीश्रीभक्तिरसामृतसिन्धौ
रसोपयोगिस्थायिभावोपपादनो नाम
पूर्वविभागः समाप्तः

सामान्यभगवद्भक्तिरसनिरूपको

दक्षिणविभागः

विभावाख्या प्रथमलहरी

प्रबलम् अनन्यश्रयिणा निषेवितः सहजरूपेण ।
अघदमनो मथुरायां सदा सनातनतनुर् जयति ॥१ ॥
रसामृताब्धेर् भागेऽस्मिन् द्वितीये दक्षिणाभिधे ।
सामान्यभगवद्भक्तिरसस् तावद् उदीर्यते ॥२ ॥
अस्य पञ्च लहर्यः स्युर् विभावाख्याग्रिमा मता ।
द्वितीया त्व् अनुभावाख्या तृतीया सात्त्विकाभिधा ।
व्यभिचार्यभिधा तुर्या स्थायिसंज्ञा च पञ्चमी ॥३ ॥

अथास्याः केशवरतेर् लक्षिताया निगद्यते ।
सामग्रीपरिपोषेन परमा रसरूपता ॥४ ॥
विभावैर् अनुभावैश् च सात्त्विकैर् व्यभिचारिभिः ।
स्वाद्यत्वं हृदि भक्तानाम् आनीता श्रवणादिभिः ।
एषा कृष्णरतिः स्थायी भावो भक्तिरसो भवेत् ॥५ ॥
प्राक्तन्य् आधुनिकी चास्ति यस्य सद्भक्तिवासना ।
एष भक्तिरसास्वादस् तस्यैव हृदि जायते ॥६ ॥

भक्तिनिर्धूतदोषाणां प्रसन्नोज्ज्वलचेतसाम् ।
श्रीभागवतरक्तानां रसिकासङ्गरङ्गिणाम् ॥७ ॥
जीवनीभूतगोविन्दपादभक्तिसुखश्रियाम् ।
प्रेमान्तरङ्गभूतानि कृत्यान्य् एवानुतिष्ठताम् ॥८ ॥
भक्तानां हृदि राजन्ती संस्कारयुगलोज्ज्वला ।
रतिर् आनन्दरूपैव नीयमाना तु रस्यताम् ॥९ ॥

कृष्णादिभिर् विभावाद्यैर् गतैर् अनुभवाध्वनि ।
प्रौढानन्दचमत्कारकाष्ठाम् आपद्यते पराम् ॥१० ॥
किन्तु प्रेमा विभावाद्यैः स्वल्पैर् नीतोऽप्य् अणीयसीम् ।
विभावनाद्यवस्थां तु सद्य आस्वाद्यतां व्रजेत् ॥११ ॥

अत्र विभावादिसामान्यलक्षणम् _
ये कृष्णभक्तमुरलीनादाद्या हेतवो रतेः ।
कार्यभूताः स्मिताद्याश् च तथाष्टौ स्तब्धतादयः ॥१२ ॥
निर्वेदाद्याः सहायाश् च ते ज्ञेया रसभावने ।
विभावा अनुभावाश् च सात्त्विका व्यभिचारिणः ॥१३ ॥

तत्र विभावाः __
तत्र ज्ञेया विभावास् तु रत्यास्वादनहेतवः ।
ते द्विधालम्बना एके तथैवोद्दीपनाः परे ॥१४ ॥

तद् उक्तम् अग्निपुराणे Ala~NkAra sechtion, 3.35 __
विभाव्यते हि रत्यादिर् यत्र येन विभाव्यते ।
विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः ॥१५ ॥

तत्र आलम्बनाः __
कृष्णश् च कृष्णभक्ताश् च बुधैर् आलम्बना मताः ।
रत्यादेर् विषयत्वेन तथाधारतयापि च ॥१६ ॥

तत्र श्रीकृष्णः _
नायकानां शिरोरत्नं कृष्णस् तु भगवान् स्वयम् ।
यत्र नित्यतया सर्वे विराजन्ते महागुणाः ।
सोऽन्यरूपस्वरूपाभ्याम् अस्मिन्न् आलम्बनो मतः ॥१७ ॥

तत्र अन्यरूपेण यथा _
हन्त मे कथम् उदेति सवत्से वत्सपालपटले रतिर् अत्र ।
इत्य् अनिश्चितमतिर् बलदेवो विस्मयस्तिमितमूर्तिर् इवासीत् ॥१८ ॥

अथ स्वरूपम् _
आवृतं प्रकटं चेति स्वरूपं कथितं द्विधा ॥१९ ॥

तत्र आवृतम् _
अन्यवेशादिनाच्छन्नं स्वरूपं प्रोक्तम् आवृतम् ॥२० ॥

तेन यथा _
मां स्नेहयति किम् उच्चैर् महिलेयं द्वारकावरोधेऽत्र ।
आं विदितं कुतुकार्थी वनितावेशो हरिश् चरति ॥२१ ॥

प्रकटस्वरूपेण यथा _
अयं कम्बुग्रीवः कमलकमनीयाक्षिपटिमा
तमालश्यामाङ्गद्युतिर् अतितरां छत्रितशिराः ।
दरश्रीवत्साङ्कः स्फुरदरिदराद्यङ्कितकरः
करोत्य् उच्चैर् मोदं मम मधुरमूर्तिर् मधुरिपुः ॥२२ ॥

अथ तद्गुणाः __
अयं नेता सुरम्याङ्गः सर्वसल्लक्षणान्वितः ।
रुचिरस् तेजसा युक्तो बलीयान् वयसान्वितः ॥२३ ॥
विविधाद्भुतभाषावित् सत्यवाक्यः प्रियं वदः ।
वावदूकः सुपाण्डित्यो बुद्धिमान् प्रतिभान्वितः ॥२४ ॥
विदग्धश् चतुरो दक्षः कृतज्ञः सुदृढव्रतः ।
देशकालसुपात्रज्ञः शास्त्रचक्षुः शुचिर् वशी ॥२५ ॥
स्थिरो दान्तः क्षमाशीलो गम्भीरो धृतिमान् समः ।
वदान्यो धार्मिकः शूरः करुणो मान्यमानकृत् ॥२६ ॥
दक्षिणो विनयी ह्रीमान् शरणागतपालकः ।
सुखी भक्तसुहृत् प्रेमवश्यः सर्वशुभङ्करः ॥२७ ॥
प्रतापी कीर्तिमान् रक्तलोकः साधुसमाश्रयः ।
नारीगणमनोहारी सर्वाराध्यः समृद्धिमान् ॥२८ ॥
वरीयान् ईश्वरश् चेति गुणास् तस्यानुकीर्तिताः ।
समुद्रा इव पञ्चाशद् दुर्विगाहा हरेर् अमी ॥२९ ॥
जीवेषु एते वसन्तो ऽपि बिन्दुबिन्दुतया क्वचित् ।
परिपूर्णतया भान्ति तत्रैव पुरुषोत्तमे ॥३० ॥

तथा हि पाद्मे पार्वत्यै शितिकण्ठेन तद्गुणाः ।
कन्दर्पकोटिलावण्य इत्य् आद्याः परिकीर्तिताः ॥३१ ॥
एत एव गुणाः प्रायो धर्माय वनमालिनः ।
पृथिव्या प्रथमस्कन्धे प्रथयाञ्चक्रिरे स्फुटम् ॥३२ ॥

यथा प्रथमे 1.16.2730 __
सत्यं शौचं दया क्षान्तिस् त्यागः सन्तोष आर्जवम् ।

शमो दमस् तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥३३॥
ज्ञानं विरक्तिर् ऐश्वर्यं शौर्यं तेजो बलं स्मृतिः।
स्वातन्त्र्यं कौशलं कान्तिर् धैर्यं मार्दवम् एव च ॥३४॥
प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः।
गाम्भीर्यं स्थैर्यम् आस्तिक्यं कीर्तिर् मानो ऽनहङ्कृतिः ॥३५॥
इमे चान्ये च भगवन् नित्या यत्र महागुणाः।
प्रार्थ्या महत्त्वम् इच्छद्भिर् न वियन्ति स्म कर्हिचित् ॥३६॥

अथ पञ्चगुणा ये स्युर् अंशेन गिरिशादिषु ॥३७॥
सदा स्वरूपसम्प्राप्तः सर्वज्ञो नित्यनूतनः।
सच्चिदानन्दसान्द्राङ्गः सर्वसिद्धिनिषेवितः ॥३८॥
अथोच्यन्ते गुणाः पञ्च ये लक्ष्मीशादिवर्तिनः।
अविचिन्त्यमहाशक्तिः कोटिब्रह्माण्डविग्रहः ॥३९॥
अवतारावलीबीजं हतारिगतिदायकः।
आत्मारामगणाकर्षीत्य् अमी कृष्णे किलाद्भुताः ॥४०॥
सर्वाद्भुतचमत्कार लीलाकल्लोलवारिधिः।
अतुल्यमधुरप्रेममण्डितप्रियमण्डलः ॥४१॥
त्रिजगन्मानसाकर्षिमुरलीकलकूजितः।
असमानोर्ध्वरूपश्रीविस्मापितचराचरः ॥४२॥
लीला प्रेम्णा प्रियाधिक्यं माधुर्यं वेणुरूपयोः।
इत्य् असाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ॥४३॥
एवं गुणाश् चतुर्भेदाश् चतुःषष्टिर् उदाहृताः।
सोदाहरणम् एतेषां लक्षणं क्रियते क्रमात् ॥४४॥

तत्र 1 सुरम्याङ्गः __
श्लाघ्याङ्गसन्निवेशो यः सुरम्याङ्गः स कथ्यते ॥४५॥

यथा _
मुखं चन्द्राकारं करभनिभम् उरुद्वयम् इदं
भुजौ स्तम्भारम्भौ सरसिजवरेण्यं करयुगम्।
कवाटाभं वक्षःस्थलम् अविरलं श्रोणिफलकं
परिक्षामो मध्यः स्फुरति मुरहन्तुर् मधुरिमा ॥४६॥

2 सर्वसल्लक्षणान्वितः _
तनौ गुणोत्थम् अङ्कोत्थम् इति सल्लक्षणं द्विधा ॥४७॥

तत्र गुणोत्थम् _
गुणोत्थं स्याद् गुणैर् योगो रक्ततातुङ्गतादिभिः ॥४८॥

यथा __
रागः सप्तसु हन्त षट्स्व् अपि शिशोर् अङ्गेष्व् अलं तुङ्गता
विसारस् त्रिषु खर्वता त्रिषु तथा गम्भीरता च त्रिषु।
दैर्घ्यं पञ्चसु किं च पञ्चसु सखे सम्प्रेक्ष्यते सूक्ष्मता
द्वात्रिंशद्वरलक्षणः कथम् असौ गोपेषु सम्भाव्यते ॥४९॥

अङ्कोत्थम् _
रेखामयं रथाङ्गादि स्याद् अङ्कोत्थं करादिषु ॥५०॥

यथा __
करयोः कमलं तथा रथाङ्गं
स्फुटरेखामयम् आत्मजस्य पश्य।
पदपल्लवयोश् च वल्लवेन्द्र
ध्वजवज्राङ्कुशमीनपङ्कजानि ॥५१॥

3 रुचिरः _
सौन्दर्येण दृगानन्दकारी रुचिर उच्यते ॥५२॥

यथा तृतीये BhP 3.2.13 __
यद् धर्मसूनोर् बत राजसूये
निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः।
कार्त्स्न्येन चाद्येह गतं विधातुर्
अर्वाक्सृतौ कौशलम् इत्य् अमन्यत ॥५३॥

यथा वा _
अष्टानां दनुजभिदङ्गपङ्कजानाम्
एकस्मिन् कथम् अपि यत्र बल्लवीनाम्।
लीलाक्षिभ्रमरततिः पपात तस्मान्
नोत्थातुं द्युतिमधुपङ्किलात् क्षमासीत् ॥५४॥

4 तेजसा युक्तः
तेजो धाम प्रभावश् चेत्य् उच्यते द्विविधं बुधैः ॥५५॥

तत्र धाम _
दीप्तिराशिर् भवेद् धाम ॥५६॥

यथा _
अम्बरमणिनिकुरम्बं विडम्बयन्न् अपि मरीचिकुलैः।
हरिवक्षसि रुचिनिविडे मणिराड् अयम् उडुर् इव स्फुरति ॥५७॥

प्रभावः _

प्रभावः सर्वजित्स्थितिः ॥५८ ॥

यथा _
दूरतस् तम् अवलोक्य माधवं
कोमलाङ्गम् अपि रङ्गमण्डले ।
पर्वतोद्भटभुजान्तरोऽप्य् असौ
कंसमल्लनिवहः स विव्यथे ॥५९ ॥

5 बलीयान् _
प्राणेन महता पूर्णो बलीयान् इति कथ्यते ॥६० ॥

यथा _
पश्य विन्ध्यगिरितोऽपि गरिष्ठं
दैत्यपुङ्गवम् उदग्रम् अरिष्टम् ।
तुलखण्डम् इव पिण्डितम् आरात्
पुण्डरीकनयनो विनुनोद ॥६१ ॥

यथा वा _
वामस् तामरसाक्षस्य भुजदण्डः स पातु वः ।
क्रीडाकन्दुकतां येन नीतो गोवर्धनो गिरिः ॥६२ ॥

6 वयसान्वितः _
वयसो विविधत्वेऽपि सर्वभक्तिरसाश्रयः ।
धर्मी किशोर एवात्र नित्यनानाविलासवान् ॥६३ ॥

यथा _
तदात्वाभिव्यक्तीकृततरुणिमारम्भरभसं
स्मितश्रीनिर्धूतस्फुरदमलराकापतिमदम् ।
दरोदञ्चत्पञ्चाशुगनवकलामेदुरम् इदं
मुरारेर् माधुर्यं मनसि मदिराक्षीर् मदयति ॥६४ ॥

7 विविधाद्भुतभाषावित् _
विविधाद्भुतभाषावित् स प्रोक्तो यस् तु कोविदः ।
नानादेश्यासु भाषासु संस्कृते प्राकृतेषु च ॥६५ ॥

यथा _
व्रजयुवतिषु शौरिः शौरसेनीं सुरेन्द्रे
प्रणतशिरसि सौरीं भारतीम् आतनोति ।
अहह पशुषु कीरेष्व् अप्य् अपभ्रंसरूपां
कथम् अजनि विदग्धः सर्वभाषावलीषु ॥६६ ॥

8 सत्यवाक्यः _
स्यान् नानृतं वचो यस्य सत्यवाक्यः स कथ्यते ॥६७ ॥

यथा _
पृथे तनयपञ्चकं प्रकटम् अर्पयिष्यामि ते
रणोर्वरितम् इत्य् अभूत् तव यथार्थम् एवोदितम् ।
रविर् भवति शीतलः कुमुदबन्धुर् अप्य् उष्णलस्
तथापि न मुरान्तक व्यभिचरिष्णुर् उक्तिस् तव ॥६८ ॥

यथा वा _
गूढोऽपि वेषेण महीसुरस्य
हरिर् यथार्थं मगधेन्द्रम् ऊचे ।
संसृष्टम् आभ्यां सह पाण्डवाभ्यां
मां विद्धि कृष्णं भवतः सपत्नम् ॥६९ ॥

9 प्रियंवदः _
जने कृतापराधेऽपि सान्त्ववादी प्रियंवदः ॥७० ॥

यथा _
कृतव्यलीकेऽपि न कुण्डलीन्द्र
त्वया विधेया मयि दोषदृष्टिः ।
प्रवास्यमानोऽसि सुरार्चितानां
परं हितायाद्य गवां कुलस्य ॥७१ ॥

10 वावदूकः _
श्रुतिप्रेष्ठोक्तिर् अखिलवाग्गुणान्वितवाग् अपि ।
इति द्विधा निगदितो वावदूको मनीषिभिः ॥७२ ॥

तत्र आद्यो यथा _
अश्लिष्टकोमलपदावलिमञ्जुलेन
प्रत्यक्षरक्षरदमन्दसुधारसेन ।
सख्यः समस्तजनकर्णरसायनेन
नाहारि कस्य हृदयं हरिभाषितेन ॥७३ ॥

द्वितीयो यथा _
प्रतिवादिचित्तपरिवृत्तिपटुर्
जगदेकसंशयविमर्दकरी ।
प्रमिताक्षराद्यविविधार्थमयी
हरिवाग् इयं मम धिनोति धियः ॥७४ ॥

11 सुपण्डित्यः _
विद्वान् नीतिज्ञ इत्य् एष सुपण्डित्यो द्विधा मतः ।
विद्वान् अखिलविद्याविन् नीतिज्ञस् तु यथार्हकृत् ॥७५ ॥

तत्र आद्यो यथा _
यं सुष्ठु पूर्वं परिचर्य गौरवात्
पितामहाद्यम्बुधरैः प्रवर्तिताः ।
कृष्णार्णवं काश्यगुरुक्ष्माभूतस्
तम् एव विद्यासरितः प्रपेदिरे ॥७६ ॥

यथा वा _
आम्नायप्रथितान्वया स्मृतिमती बाढं षडङ्गोज्ज्वला
न्यायेनानुगता पुराणसुहृदा मीमांसया मण्डिता ।
त्वां लब्धावसरा चिराद् गुरुकुले प्रेक्ष्य स्वसङ्गार्थिनं
विद्या नाम वधूश् चतुर्दशगुणा गोविन्द शुश्रूयते ॥७७ ॥

द्वितीयो यथा _
मृत्युस् तस्करमण्डले सुकृतिनां वृन्दे वसन्तानिलः
कन्दर्पो रमणीषु दुर्गतकुले कल्याणकल्पद्रुमः ।
इन्दुर् बन्धुगणे विपक्षपटले कालाग्निरुद्राकृतिः
शास्ति स्वस्तिधुरन्धरो मधुपुरीं नीत्या मधूनां पतिः ॥७८ ॥

12 बुद्धिमान् _
मेधावी सूक्ष्मधीश् चेति प्रोच्यते बुद्धिमान् द्विधा ॥७९ ॥

तत्र मेधावी यथा _
अवन्तिपुरवासिनः सदनम् एत्य सान्दीपनेर्
गुरोर् जगति दर्शयन् समयम् अत्र विद्यार्थिनाम् ।
सकृन् निगदमात्रतः सकलम् एव विद्याकुलं
दधौ हृदयमन्दिरे किम् अपि चित्रवन् माधवः ॥८० ॥

सूक्ष्मधीः यथा _
यदुभिर् अयम् अवध्यो म्लेच्छराजस् तद् एनं
तरलतमसि तस्मिन् विद्रवन्न् एव नेष्ये ।
सुखमयनिजनिद्राभञ्जनध्वंसिदृष्टिर्
झरमुचि मुचुकुन्दः कन्दरे यत्र शेते ॥८१ ॥

13 प्रतिभान्वितः _
सद्यो नवनवोल्लेखिज्ञानं स्यात् प्रतिभान्वितः ॥८२ ॥

यथा पद्यावल्यां 283 _
वासः सम्प्रति केशव क्व भवतो मुग्धेक्षणे नन्व् इदं
वासं ब्रूहि शठ प्रकामसुभगे त्वद्गात्रसंसर्गतः ।
यामिन्याम् उषितः क्व धूर्त वितनुर् मुष्णाति किं यामिनी
शौरिर् गोपवधूं छलैः परिहसन्न् एवंविधैः पातु वः ॥८३ ॥

14 विदग्धः _
कलाविलासदिग्धात्मा विदग्ध इति कीर्त्यते ॥८४ ॥

यथा __
गीतं गुम्फति ताण्डवं घटयति ब्रूते प्रहेलीक्रमं
वेणुं वादयते स्रजं विरचयत्य् आलेख्यम् अभ्यस्यति ।
निर्माति स्वयम् इन्द्रजालपटलीं द्यूते जयत्य् उन्मदान्
पश्योद्दामकलाविलासवसतिश् चित्रं हरिः क्रीडति ॥८५ ॥

15 चतुरः _
चतुरो युगपद्भूरिसमाधानकृद् उच्यते ॥८६ ॥

यथा _
पारावतीविरचनेन गवां कलापं
गोपाङ्गनागणम् अपाङ्गतरङ्गितेन ।
मित्राणि चित्रतरसङ्गरविक्रमेण
धिन्वन्न् अरिष्टभयदेन हरिर् विरेजे ॥८७ ॥

16 दक्षः _
दुष्करे क्षिप्रकारी यस् तं दक्षं परिचक्षते ॥८८ ॥

यथा श्रीदशमे 10.59.17 __
यानि योधैः प्रयुक्तानि
शस्त्रास्त्राणि कुरूद्वह ।
हरिस् तान्य् अच्छिनत् तीक्ष्णैः
शरैर् एकैकशस्त्रिभिः ॥८९ ॥

यथा वा _
अघहर कुरु युग्मीभूय नृत्यं मयैव
त्वम् इति निखिलगोपीप्रार्थनापूर्तिकामः ।
अतनुत गतिलीलालाघवोर्मिं तथासौ
ददृशुर् अधिकम् एतास् तं यथा स्वस्वपार्श्वे ॥९० ॥

17 कृतज्ञः _
कृतज्ञः स्याद् अभिज्ञो यः कृतसेवादिकर्मणाम् ॥९१ ॥

यथा महाभारते२ _
ऋणम् एतत् प्रवृद्धं मे हृदयान् नापसर्पति ।
यद् गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम् ॥९२ ॥

यथा वा _
अनुगतिम् अतिपूर्वं चिन्तयन्न् ऋक्षमौलेर्
अकुरुत बहुमानं शौरिर् आदाय कन्याम् ।
कथम् अपि कृतम् अल्पं विस्मरेन् नैव साधुः
किम् उत स खलु साधुश्रेणिचूडाग्ररत्नम् ॥९३ ॥

18 सुदृढव्रतः _
प्रतिज्ञानियमौ यस्य सत्यौ स सुदृढव्रतः ॥९४ ॥

तत्र सत्यप्रतिज्ञो यथा हरिवंशे 2.68.38३ _
न देवगन्धर्वगणा न राक्षसा
न चासुरा नैव च यक्षपन्नगाः ।
मम प्रतिज्ञाम् अपहन्तुम् उद्यता
मुने समर्थाः खलु सत्यम् अस्तु ते ॥९५ ॥

यथा वा _
सहेलम् आखण्डलपाण्डुपुत्रौ
विधाय कंसारिर् अपारिजातौ ।
निजप्रतिज्ञां सफलां दधानः
सत्यां च कृष्णां च सुखाम् अकार्षीत् ॥९६ ॥

सत्यनियमो यथा _
गिरेर् उद्धरणं कृष्ण दुष्करं कर्म कुर्वता ।
मद्भक्तः स्यान् न दुःखीति स्वव्रतं विवृतं त्वया ॥९७ ॥

19 देशकालसुपात्रज्ञः _
देशकालसुपात्रज्ञस् तत्तद्योग्यक्रियाकृतिः ॥९८ ॥

यथा _
शरज्ज्योत्स्नातुल्यः कथम् अपि परो नास्ति समयस्
त्रिलोक्याम् आकृडः क्वचिद् अपि न वृन्दावनसमः ।
न काप्य् अम्भोजाक्षी व्रजयुवतिकल्पेति विमृशन्
मनो मे सोत्कण्ठं मुहुर् अजनि रासोत्सवरसे ॥९९ ॥

20 शास्त्रचक्षुः _
शास्त्रानुसारिकर्मा यः शास्त्रचक्षुः स कथ्यते ॥१०० ॥

यथा _
अभूत् कंसरिपोर् नेत्रं
शास्त्रम् एवार्थदृष्टये ।
नेत्राम्बुजं तु युवती
वृन्दान् मादाय केवलम् ॥१०१ ॥

21 शुचिः _
पावनश् च विशुद्धेश् चेत्य् उच्यते द्विविधः शुचिः ।
पावनः पापनाशी स्याद् विशुद्धस् त्यक्तदूसणः ॥१०२ ॥

तत्र पावनो यथा पाद्मे __
तं निर्व्याजं भज गुणनिधे पावनं पावनानां
श्रद्धारज्यन्मतिर् अतितराम् उत्तमःश्लोकमौलिम् ।
प्रोद्यन्न् अन्तःकरणकुहरे हन्त यन्नामभानोर्
आभासो ऽपि क्षपयति महापातकध्वान्तराशिम् ॥१०३ ॥

विशुद्धो यथा _
कपटं च हठश् च नाच्युते
बत सत्राजिति नाप्य् अदीनता ।
कथम् अद्य वृथा स्यमन्तक
प्रसभं कौस्तुभसख्यम् इच्छसि ॥१०४ ॥

22 वशी
वशी जितेन्द्रियः प्रोक्तः ॥१०५ ॥

यथा प्रथमे 1.11.37 __
उद्दामभावपिशुनामलवल्गुहास
व्रीडावलोकनिहतो मदनो ऽपि यासाम् ।
संमुह्य चापम् अजहात् प्रमदोत्तमास् ता
यस्येन्द्रियं विमथितुं कुहकैर् न शेकुः ॥१०६ ॥

23 स्थिरः
आफलोदयकृत् स्थिरः ॥१०७ ॥

यथा
निर्वेदम् आप न वनभ्रमणे मुरारिर्

नाचिन्तयद् व्यसनम् ऋक्षविलप्रवेशे ।
आहृत्य हन्त मणिम् एव पुरं प्रपेदे
स्याद् उद्यमः कृतधियां हि फलोदयान्तः ॥१०८ ॥

24 दान्तः _
स दान्तो दुःसहम् अपि योग्यं क्लेशः सहेत यः ॥१०९ ॥

यथा _
गुरुम् अपि गुरुवासक्लेशम् अव्याजभक्त्या
हरिर् अजगणदन्तः कोमलाङ्गोऽपि नायम् ।
प्रकृतिर् अतिदुरूहा हन्त लोकोत्तराणां
किम् अपि मनसि चित्रं चिन्त्यमाना तनोति ॥११० ॥

25 क्षमाशीलः
क्षमाशीलोऽपराधानां सहनः परिकीर्त्यते ॥१११ ॥

यथा माघकाव्ये४ 16.25
प्रतिवाचम् अदत्त केशवः
शपमानाय न चेदिभूभृते ।
अनहुङ्कुरुते घनध्वनिः
न हि गोमायुरुतानि केशरी ॥११२ ॥

यथा वा यामुनाचार्यस्तोत्रे५ 60 _
रघुवर यद् अभूस् त्वं तादृशो वायसस्य
प्रणत इति दयालुर् यच् च चैद्यस्य कृष्ण ।
प्रतिभवम् अपराद्धुर् मुग्ध सायुज्यदोऽभूर्
वद किम् अपदम् आगतस् तस्य तेऽस्ति क्षमायाः ॥११३ ॥

26 गम्भीरः _
दुर्विबोधाशयो यस् तु स गम्भीरः इतीर्यते ॥११४ ॥

यथा _
वृन्दावने वरातिः स्तुतिभिर् नितराम् उपास्यमानोऽपि ।
शक्तो न हरिर् विधिना रुष्टस् तुष्टोऽथवा ज्ञातुम् ॥११५ ॥

यथा वा _
उन्मदोऽपि हरिर् नव्यराधाप्रणयसीधुना ।
अभिज्ञेनापि रामेण लक्षितोऽयम् अविक्रियः ॥११६ ॥

27 धृतिमान् _
पूर्णस्पृहश् च धृतिमान् शान्तश् च क्षोभकारणे ॥११७ ॥

तत्र आद्यो _
स्वीकुर्वन्न् अपि नितरां यशःप्रियत्वं
कंसारिर् मगधपतेर् वधप्रसिद्धाम् ।
भीमाय स्वयम् अतुलाम् अदत्त कीर्तिं
किं लोकोत्तरगुणशालिनाम् अपेक्ष्यम् ॥११८ ॥

द्वितीयो यथा _
निन्दितस्य दमघोषसूनुना
सम्भ्रमेण मुनिभिः स्तुतस्य च ।
राजसूयसदसि क्षितीश्वरैः
कापि नास्य विकृतिर् वितर्किता ॥११९ ॥

28 समः _
रागद्वेषविमुक्तो यः समः स कथितो बुधैः ॥१२० ॥

यथा श्रीदशमे 10.16.33 __
न्याय्यो हि दण्डः कृतकिल्बिषे ऽस्मिंस्
तवावतारः खलनिग्रहाय ।
रिपोः सुतानाम् अपि तुल्यदृष्टेर्
धत्से दमं फलम् एवानुशंसन् ॥१२१ ॥

यथा वा _
रिपुर् अपि यदि शुद्धो मण्डनीयस् तवासौ
यदुवर यदि दुष्टो दण्डनीयः सुतोऽपि ।
न पुनर् अखिलभर्तुः पक्षपातोज्झितस्य
क्वचिद् अपि विषमं ते चेष्टितं जाघटीति ॥१२२ ॥

29 वदान्यः _
दानवीरो भवेद् यस् तु स वदान्यो निगद्यते ॥१२३ ॥

यथा _
सर्वार्थिनां बाढम् अभीष्टपूर्त्या
व्यर्थीकृताः कंसनिसूदनेन ।
ह्रियेव चिन्तामणिकामधेनु
कल्पद्रुमा द्वारवतीं भजन्ति ॥१२४ ॥

यथा वा _
येषां षोडशपूरिता दशशती स्वान्तःपुराणां तथा

चाष्टाश्लिष्टशतं विभाति परितस् तत्सङ्ख्यपत्नीयुजाम्।
एकैकं प्रति तेषु तर्णकभृतां भूषाजुषाम् अन्वहं
गृष्टीनां युगपच् च बद्धम् अददाद् यस् तस्य वा कः समः ॥१२५॥

30 धार्मिकः _
कुर्वन् कारयते धर्मं यः स धार्मिक उच्यते ॥१२६॥

यथा _
पादैश् चतुर्भिर् भवता वृषस्य
गुप्तस्य गोपेन्द्र तथाभ्यवर्धि।
स्वैरं चरन्न् एव यथा त्रिलोक्याम्
अधर्मस्पर्शाणि हठाज् जघास ॥१२७॥

यथा वा _
वितायमानैर् भवता मखोत्करैर्
आकृष्यमाणेषु पतिष्व् अनारतम्।
मुकुन्द खिन्नः सुरसुभ्रुवां गणस्
तवावतारं नवमं नमस्यति ॥१२८॥

31 शूरः _
उत्साही युधि शूरोऽस्त्रप्रयोगे च विचक्षणः ॥१२९॥

तत्र आद्यो यथा _
पृथुसमरसरो विगाह्य कुर्वन्
द्विषद् अरविन्दवने विहारचर्याम्।
स्फुरसि तरलबाहुदण्डशुण्डस्
त्वम् अघविदारणरावणेन्द्रलीलः ॥१३०॥

द्वितीयो यथा _
क्षणाद् अक्षौहिणीवृन्दे जरासन्धस्य दारुणे।
दृष्टः कोऽप्य् अत्र नादष्टो हरेः प्रहरणाहिभिः ॥१३१॥

32 करुणः __
परदुःखासहो यस् तु करुणः स निगद्यते ॥१३२॥

यथा _
राज्ञाम् अगाधगतिभिर् मगधेन्द्रकारा
दुःखान्धकारपटलैः स्वयम् अन्धितानाम्।
अक्षीणि यः सुखमयानि घृणी व्यतानीद्
वृन्दे तम् अद्य यदुनन्दनपद्मबन्धुम् ॥१३३॥

यथा वा _
स्खलन्नयनवारिभिर् विरचिताभिषेकश्रिये
त्वराभरतरङ्गतः कवलितात्मविस्फूर्तये।
निशान्तशरशायिना सुरसरित्सुतेन स्मृतेः
सपद्यवशवर्त्मणो भगवतः कृपायै नमः ॥१३४॥

33 मान्यमानकृत् _
गुरुब्राह्मणवृद्धादिपूजको मान्यमानकृत् ॥१३५॥

यथा _
अभिवाद्य गुरोः पदाम्बुजं
पितरं पूर्वजम् अप्य् अथानतः।
हरिर् अञ्जलिना तथा गिरा
यदुवृद्धाननमत्क्रमादयम् ॥१३६॥

34 दक्षिणः __
सौशील्यसौम्यचरितो दक्षिणः कीर्त्यते बुधैः ॥१३७॥

यथा __
भृत्यस्य पश्यति गुरून् अपि नापराधान्
सेवां मनाग् अपि कृतां बहुधाभ्युपैति।
आविष्करोति पिशुनेष्व् अपि नाभ्यसूयां
शीलेन निर्मलमतिः पुरुषोत्तमो ऽयम् ॥१३८॥

35 विनयी _
औद्धत्यपरिहारी यः कथ्यते विनयीत्य् असौ ॥१३९॥

यथा माघकाव्ये 13.7 _
अवलोक एष नृपतेः सुदूरतो
रभसाद् रथाद् अवतरीतुम् इच्छतः।
अवतीर्णवान् प्रथमम् आत्मना हरिर्
विनयं विशेषयति सम्भ्रमेण सः ॥१४०॥

36 ह्रीमान् _
ज्ञातेऽस्मररहस्येऽन्यैः क्रियमाणे स्तवेऽथवा।
शालीनत्वेन सङ्कोचं भजन् ह्रीमान् उदीर्यते ॥१४१॥

यथा ललितमाधवे 9.40 _
दरोदञ्चद्गोपीस्तनपरिसरप्रेक्षणभयात्

करोत्कम्पादीषच् चलति किल गोवर्धनगिरौ ।
भयार्तैर् आरब्धस्तुतिर् अखिलगोपैः स्मितमुखं
पुरो दृष्ट्वा रामं जयति नमितास्यो मधुरिपुः ॥१४२ ॥

37 शरणागतपालकः _
पालयन् शरणापन्नान् शरणागतपालकः ॥१४३ ॥

यथा _
ज्वर परिहर वित्रासं त्वम् अत्र समरे कृतापराधेऽपि ।
सद्यः प्रपद्यमाने यद् इन्दवति यादवेन्द्रोऽयम् ॥१४४ ॥

38 सुखी _
भोक्ता च दुःखगन्धैर् अप्य् अस्पृष्टश् च सुखी भवेत् ॥१४५ ॥

तत्र आद्यो यथा _
रत्नालङ्कारभारस् तव धनदमनोर् आज्यवृत्त्याप्य् अलभ्यः
स्वप्ने दम्भोलिपाणेर् अपि दुरधिगमं द्वारि तौर्यत्रिकं च ।
पार्श्वे गौरीगरिष्ठाः प्रचुरशशिकलाः कान्तसर्वाङ्गभाजः
सीमन्तिन्यश् च नित्यं यदुवर भुवने कस् त्वदन्योऽस्ति भ
ोगी ॥१४६ ॥

द्वितीयो यथा _
न हानिं न म्लानिं निजगृहकृत्यव्यसनितां
न घोरं नोद्घूर्णां न किल कदनं वेत्ति किम् अपि ।
वराङ्गीभिः साङ्गीकृतसुहृदनङ्गाभिर् अभितो
हरिर् वृन्दारण्ये परम् अनिशम् उच्चैर् विहरति ॥१४७ ॥

39 भक्तसुहृत् _
सुसेव्यो दासबन्धुश् च द्विधा भक्तसुहृन् मतः ॥१४८ ॥

तत्र आद्यो यथा विष्णुधर्मे _
तुलसीदलमात्रेण जलस्य चुलुकेन च ।
विक्रीणीते स्वम् आत्मानं भक्तेभ्यो भक्तवत्सलः ॥१४९ ॥

द्वितीयो यथा प्रथमे 1.9.37 __
स्वनिगमम् अपहाय मत्प्रतिज्ञाम्
ऋतम् अधिकर्तुम् अवप्लुतो रथस्थः ।
धृतरथचरणो ऽभ्ययाच् चलद्गुर्
हरिर् इव हन्तुम् इभं गतोत्तरीयः ॥१५० ॥

40 प्रेमवश्यः _
प्रियत्वमात्रवश्यो यः प्रेमवश्यो भवेद् असौ ॥१५१ ॥

यथा श्रीदशमे 10.80.19 __
सख्युः प्रियस्य विप्रर्षेर् अङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चद् अब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥१५२ ॥

यथा वा तत्रैव 10.9.18 __
स्वमातुः स्विन्नगात्राया विस्रस्तकवरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत् स्वबन्धने ॥१५३ ॥

41 सर्वशुभङ्करः _
सर्वेषां हितकारी यः स स्यात् सर्वशुभङ्करः ॥१५४ ॥

यथा _
कृताः कृतार्था मुनयो विनोदैः
खलक्षयेणाखिलधार्मिकाश् च ।
वपुर्विमर्देन खलाश् च युद्धे
न कस्य पथ्यं हरिणा व्यधायि ॥१५५ ॥

42 प्रतापी _
प्रतापी पौरुषोद्भूतशत्रुतापि प्रसिद्धिभाक् ॥१५६ ॥

यथा _
भवतः प्रतापतपने
भुवनं कृष्ण प्रतापयति ।
घोरासुरघुकानां
शरणम् अभूत् कन्दरातिमिरम् ॥१५७ ॥

43 कीर्तिमान् _
सद्गुणैर् निर्मलैः ख्यातः कीर्तिमान् इति कीर्त्यते ॥१५८ ॥

यथा _
त्वद्यशःकुमुदबन्धुकौमुदी
शुभ्रभावम् अभितो नयन्त्य् अपि ।
नन्दनन्दन कथं नु निर्ममे
कृष्णभावकलिलं जगत्त्रयम् ॥१५९ ॥

यथा वा ललितमाधवे 5.18 _
भीता रुद्रं त्यजति गिरिजा श्यामम् अप्रेक्ष्य कण्ठं

शुभ्रं दृष्ट्वा क्षिपति वसनं विस्मितो नीलवासाः।
क्षीरं मत्वा श्रपयति यमीनीरम् आभीरिकोत्का
गीते दामोदरयशसि ते वीणया नारदेन ॥१६० ॥

44 रक्तलोकः __
पात्रं लोकानुरागाणां रक्तलोकं विदुर् बुधाः ॥१६१ ॥

यथा प्रथमे 1.11.9 __
यर्ह्य् अम्बुजाक्षापससार भो भवान्
कुरून् मधून् वाथ सुहृद्दिदृक्षया
तत्राब्दकोटिप्रतिमः क्षणो भवेद्
रविं विनाक्ष्णोर् इव नस् तवाच्युत ॥१६२ ॥

यथा वा _
आशीस्तथ्या जय जय जयेत्य् आविरास्ते मुनीनां
देवश्रेणीस्तुतिकलकलो मेदुरः प्रादुरस्ति।
हर्षाद् घोषः स्फुरति परितो नागरीणां गरीयान्
के वा रङ्गस्थलभुवि हरौ भेजिरे नानुरागम् ॥१६३ ॥

45 साधुसमाश्रयः _
सदेकपक्षपाती यः स स्यात् साधुसमाश्रयः ॥१६४ ॥

यथा _
पुरुषोत्तम चेद् अवातरिष्यद्
भुवनेऽस्मिन् न भवान् भुवः शिवाय।
विकटासुरमण्डलान् न जाने
सुजनानां बत का दशाभविष्यत् ॥१६५ ॥

46 नारीगणमनोहारी __
नारीगणमनोहारी सुन्दरीवृन्दमोहनः ॥१६६ ॥

यथा श्रीदशमे 10.90.26 __
श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः।
उरुगायोरुगीतो वा पश्यन्तीनां च किं पुनः ॥१६७ ॥

यथा वा __
त्वं चुम्बकोऽसि माधव लोहमयी नूनम् अङ्गनाजातिः।
धावति ततस् ततोऽसौ यतो यतः क्रीडया भ्रमसि ॥१६८ ॥

47 सर्वाराध्यः _
सर्वेषाम् अग्रपूज्यो यः स सर्वाराध्य उच्यते ॥१६९ ॥

यथा प्रथमे 1.9.41
मुनिगणनृपवर्यसङ्कुले ऽन्तः
सदसि युधिष्ठिरराजसूय एषाम्।
अर्हणम् उपपेद ईक्षणीयो
मम दृशिगोचर एष आविर् आत्मा ॥१७० ॥

48 समृद्धिमान् __
महासम्पत्तियुक्तो यो भवेद् एष समृद्धिमान् ॥१७१ ॥

यथा _
षट्पञ्चाशद्यदुकुलभुवां कोटयस् त्वां भजन्ते
वर्षन्त्य् अष्टौ किम् अपि निधयश् चार्थजातं तवामी।
शुद्धान्तश् च स्फुरति नवभिर् लक्षितः सौधलक्ष्मैर्
लक्ष्मीं पश्यन् मुरदमन ते नात्र चित्रायते कः ॥१७२ ॥

यथा वा कृष्णकर्णामृते६ __
चिन्तामणिश् चरणभूषणम् अङ्गनानां
शृङ्गारपुष्पतरवस् तरवः सुराणाम्।
वृन्दावने व्रजधनं ननु कामधेनु
वृन्दानि चेति सुखसिन्धुर् अहो विभूतिः ॥१७३ ॥

49 वरीयान् __
सर्वेषाम् अतिमुख्यो यः स वरीयान् इतीर्यते ॥१७४ ॥

यथा _
ब्रह्मन्न् अत्र पुरुद्विषा सह पुरः पीठे निषीद क्षणं
तुष्णीं तिष्ठ सुरेन्द्र चाटुभिर् अलं वारीश दूरीभव।
एते द्वारि मुहुः कथं सुरगणाः कुर्वन्ति कोलाहलं
हन्त द्वारवतीपतेर् अवसरो नाद्यापि निष्पद्यते ॥१७५ ॥

50 ईश्वरः _
द्विधेश्वरः स्वतन्त्रश् च दुर्लङ्घ्याज्ञश् च कीर्त्यते ॥१७६ ॥

तत्र स्वतन्त्रो यथा
कृष्णः प्रसादम् अकरोद् अपराध्यतेऽपि
पादाङ्कम् एव किल कालियपन्नगाय।
न ब्रह्मणे दृशम् अपि स्तुवतेऽप्य् अपूर्वं
स्थाने स्वतन्त्रचरितो निगमैर् नुतोऽयम् ॥१७७ ॥

दुर्लङ्घ्याज्ञो यथा तृतीये 3.2.21 __
बलिं हरद्भिश् चिरलोकपालैः
किरीटकोट्येडितपादपीठः।
तत् तस्य कैङ्कर्यम् अलं भृतान् नो
विग्लापयत्य् अङ्ग यद् उग्रसेनम् ॥१७८॥

यथा वा _
नव्ये ब्रह्माण्डवृन्दे सृजति विधिगणः सृष्टये यः कृताज्ञो
रुद्रौघः कालजीर्णे क्षयम् अवतनुते यः क्षयायानुशिष्टः।
रक्षां विष्णुस्वरूपा विदधति तरुणे रक्षिणो ये त्वदंशाः
कंसारे सन्ति सर्वे दिशि दिशि भवतः शासनेऽजाण्डनाथाः ॥१७९॥

अथ 51 सदास्वरूपसम्प्राप्तः __
सदास्वरूपसम्प्राप्तो मायाकार्यवशीकृतः ॥१८०॥

यथा प्रथमे 1.11.39 __
एतद् ईशनम् ईशस्य प्रकृतिस्थो ऽपि तद्गुणैः।
न युज्यते सदात्मस्थैर् यथा बुद्धिस् तदाश्रया ॥१८१॥

52 सर्वज्ञः _
परचित्तस्थितं देशकालाद्यन्तरितं तथा।
यो जानाति समस्तार्थः स सर्वज्ञो निगद्यते ॥१८२॥

यथा प्रथमे 1.1511 __
यो नो जुगोप वन एत्य दुरन्तकृच्छ्राद्
दुर्वाससो ऽरिरचिताद् अयुताग्रभुग् यः।
शाकान्नशिष्टम् उपयुज्य यतस् त्रिलोकीं
तृप्ताम् अमंस्त सलिले विनिमग्नसङ्घः ॥१८३॥

53 नित्यनूतनः _
सदानुभूयमानोऽपि करोत्य् अननुभूतवत्।
विस्मयं माधुरीभिर् यः स प्रोक्तो नित्यनूतनः ॥१८४॥

यथा प्रथमे 1.11.34 __
यद्यप्य् असौ पार्श्वगतो रहोगतस्
तथापि तस्याङ्घ्रियुगं नवं नवम्।
पदे पदे का विरमेत तत्पदाच्
चलापि यच् छ्रीर् न जहाति कर्हिचित् ॥१८५॥

यथा वा ललितमाधवे 1.52 __
कुलवरतनुधर्मग्रावबृन्दानि भिन्दन्
सुमुखि निशितदीर्घापाङ्गटङ्कच्छटाभिः।
युगपद् अयम् अपूर्वः कः पुरो विश्वकर्मा
मरकतमणिलक्षैर् गोष्ठकक्षां चिनोति ॥१८६॥

54 सच्चिदानन्दसान्द्राङ्गः _
सच्चिदानन्दसान्द्राङ्गश् चिदानन्दघनाकृतिः ॥१८७॥

यथा _
क्लेशे क्रमात् पञ्चविधे क्षयं गते
यद्ब्रह्मसौख्यं स्वयम् अस्फुरत् परम्।
तद् व्यर्थयन् कः पुरतो नराकृतिः
श्यामोऽयम् आमोदभरः प्रकाशते ॥१८८॥

यथा व ब्रह्मसंहितायाम् आदिपुरुषरहस्ये 5.51 _
यस्य प्रभा प्रभवतो जगदण्डकोटि
कोटिष्व् अशेषवसुधादि विभूतिभिन्नम्।
तद् ब्रह्म निष्कलम् अनन्तम् अशेषभूतं
गोविन्दम् आदिपुरुषं तम् अहं भजामि ॥१८९॥

अतः श्रीवैष्णवैः सर्वश्रुतिस्मृतिनिदर्शनैः।
तद् ब्रह्म श्रीभगवतो विभूतिर् इति कीर्त्यते ॥१९०॥

तथा हि यामुनाचार्यस्तोत्रे 14 __
यदण्डान्तरगोचरं च यद्
दशोत्तराण्य् आवरणानि यानि च।
गुणाः प्रधानं पुरुषः परं पदं
परात्परं ब्रह्म च ते विभूतयः ॥१९१॥

55 सर्वसिद्धिनिषेवितः _
स्ववशाखिलसिद्धिः स्यात् सर्वसिद्धिनिषेवितः ॥१९२॥

यथा _
दशभिः सिद्धसखीभिर् वृता महासिद्धयः क्रमाद् अष्टौ।
अणिमादयो लभन्ते नावसरं द्वारि कृष्णस्य ॥१९३॥

56 अथ अविचिन्त्यमहाशक्तिः _
दिव्यसर्गादिकर्तृत्वं ब्रह्मरुद्रादिमोहनम्।
भक्तप्रारब्धविध्वंस इत्य् आद्य् अचिन्त्यशक्तिता ॥१९४॥

तत्र द्वियसर्गादिकर्तृत्वं यथा _
आसीच् छायाद्वितीयः प्रथमम् अथ विभुर् वत्सडिम्भादिदेहान्
अंशेनांशेन चक्रे तद् अनु बहुचतुर्बाहुतां तेषु तेने ।
वृत्तस् तत्त्वादिवीतैर् अथ कम् अलभवैः स्तूयमानोऽखिलात्मा
तावद् ब्रह्माण्डसेव्यः स्फुटम् अजनि ततो यः प्रपद्ये तम्
ईशम् ॥१९५॥

ब्रह्मरुद्रादिमोहनं यथा _
मोहितः शिशुकृतौ पितामहो
हन्त शम्भुर् अपि जृम्भितो रणे ।
येन कंसरिपुणाद्य तत्पुरः
के महेन्द्र विबुधा भवद्विधाः ॥१९६॥

भक्तप्रारब्धविध्वंसो यथा श्रीदशमे 10.45.45 _
गुरुपुत्रम् इहानीतं निजकर्मनिबन्धनम् ।
आनयस्व महाराज मच्छासनपुरस्कृतः ॥१९७॥

आदिशब्देन दुर्घटघटनापि _
अपि जनिपरिहीनः सूनुर् आभीरभर्तुर्
विभुर् अपि भुजयुग्मोत्सङ्गपर्याप्तमूर्तिः ।
प्रकटितबहुरूपोऽप्य् एकरूपः प्रभुर् मे
धियम् अयम् अविचिन्त्यानन्तशक्तिर् धिनोति ॥१९८॥

57 कोटिब्रह्माण्डविग्रहः _
अगण्यजगदण्डाढ्यः कोटिब्रह्माण्डविग्रहः ।
इति श्रीविग्रहस्यास्य विभुत्वम् अनुकीर्तितम् ॥१९९॥

यथा तत्रैव 10.14.11 __
क्वाहं तमोमहदहंखचराग्निवार्भू
संवेष्टिताण्डघटसप्तवितस्तिकायः ।
क्वेदृग्विधाविगणिताण्डपराणुचर्या
वाताध्वरोमविवरस्य च ते महित्वम् ॥२००॥

यथा वा _
तत्त्वैर् ब्रह्माण्डम् आढ्यं सुरकुलभुवनैश् चाङ्कितं योजनानां
पञ्चाशत्कोट्यखर्वक्षितिखचितम् इदं यच् च पातालपूर्णम् ।
तादृग्ब्रह्माण्डलक्षायुतपरिचयभाग् एककक्षं विधात्रा
दृष्टं यस्यात्र वृन्दावनम् अपि भवतः कः स्तुतौ तस्य शक्तः ॥२०१॥

58 अवतारावलीबीजम्
अवतारावलीबीजम् अवतारी निगद्यते ॥२०२॥

यथा श्रीगीतगोविन्दे 1.16 _
वेदान् उद्धरते जगन्ति वहते भूगोलम् उद्बिभ्रते
दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यम् आतन्वते
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥२०३॥

59 हतारिगतिदायकः _
मुक्तिदाता हतारीणां हतारिगतिदायकः ॥२०४॥

यथा _
पराभवं फेनिलवक्त्रतां च
बन्धं च भीतिं च मृतिं च कृत्वा ।
पवर्गदातापि शिखण्डमौले
त्वं शात्रवाणाम् अपवर्गदोऽसि ॥२०५॥

यथा वा _
चित्रं मुरारे सुरवैरिपक्षस्
त्वया समन्ताद् अनुबद्धयुद्धः ।
अमित्रवृन्दान्य् अविभिद्य भेदं
मित्रस्य कुर्वन्न् अमृतं प्रयाति ॥२०६॥

60 आत्मारामगणाकर्षी _
आत्मारामगणाकर्षीत्य् एतद् व्यक्तार्थम् एव हि ॥२०७॥

यथा _
पूर्णपरमहंसं मां माधव लीलामहौषधिर् घ्राता ।
कृत्वा बत सारङ्गं व्यधित कथं सारसे तृषितम् ॥२०८॥

अथासाधरणगुणचतुष्के _ 61 लीलामाधुर्यं __

यथा बृहद्वामने _
सन्ति यद्यपि मे प्राज्या लीलास् तास् ता मनोहराः ।
न हि जाने स्मृते रासे मनो मे कीदृशं भवेत् ॥२०९॥

यथा वा _
परिस्फुरतु सुन्दरं चरित्रम् अत्र लक्ष्मीपतेस्
तथा भुवननन्दिनस् तदवतारवृन्दस्य च ।

हरेर् अपि चमत्कृतिप्रकरवर्धनः किन्तु मे
बिभर्ति हृदि विस्मयं कम् अपि रासलीलारसः ॥२१० ॥

62 प्रेम्णा प्रियाधिक्यम् यथा श्रीदशमे 10.31.15 __
अटति यद् भवान् अह्नि काननं
त्रुटिर् युगायते त्वाम् अपश्यताम् ।
कुटिलकुन्तलं श्रीमुखं च ते
जड उदीक्षितां पक्ष्मकृत् दृशाम् ॥२११ ॥

यथा वा __
ब्रह्मरात्रिततिर् अप्य् अघशत्रो
सा क्षणार्धवद् अगात् तव सङ्गे ।
हा क्षणार्धम् अपि वल्लविकानां
ब्रह्मरात्रिततिवद् विरहेऽभूत् ॥२१२ ॥

63 वेणुमाधुर्यम् यथा तत्रैव 10.33.15 _
सवनशस् तदुपधार्य सुरेशाः
शक्रशर्वपरमेष्ठिपुरोगाः ।
कवय आनतकन्धरचित्ताः
कश्मलं ययुर् अनिश्चिततत्त्वाः ॥२१३ ॥

यथा वा विदग्धमाधवे 1.26 __
रुन्धन्न् अम्बुभृतश् चमत्कृतिपरं कुर्वन् मुहुस् तुम्बुरुं
ध्यानाद् अन्तरयन् सनन्दनमुखान् विस्मेरयन् वेधसम् ।
औत्सुक्यावलिभिर् बलिं चटुलयन् भोगीन्द्रम् आघूर्णयन्
भिन्दन्न् अण्डकटाहभित्तिम् अभितो बभ्राम वंशीध्वनिः ॥२१४ ॥

64 रूपमाधुर्यं यथा तृतीये 3.2.12
यन् मर्त्यलीलौपयिकं स्वयोग
मायाबलं दर्शयता गृहीतम् ।
विस्मापनं स्वस्य च सौभगर्द्धेः
परं पदं भूषणभूषणाङ्गम् ॥२१५ ॥

श्रीदशमे च 10.29.40 __
का स्त्र्य् अङ्ग ते कलपदायतमूर्च्छितेन
संमोहिता ऽर्यपदवीं न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगम् इदं च निरीक्ष्य रूपं
यद् गोद्विजद्रुममृगान् पुलकान्य् अबिभ्रत् ॥२१६ ॥

यथा वा ललितमाधवे 8.34 __
अपरिकलितपूर्वः कश् चमत्कारकारी
स्फुरति मम गरीयान् एष माधुर्यपूरः ।
अयम् अहम् अपि हन्त प्रेक्ष्य यं लुब्धचेताः
सरभसम् उपभोक्तुं कामये राधिकेव ॥२१७ ॥

समस्तविविधाश्चर्यकल्याणगुणवारिधेः ।
गुणानाम् इह कृष्णस्य दिङ्मात्रम् उपदर्शितम् ॥२१८ ॥

यथा च श्रीदशमे 10.14.7 _
गुणात्मनस् ते ऽपि गुणान् विमातुं
हितावतीर्णस्य क ईशिरे ऽस्य ।
कालेन यैर् वा विमिताः सुकल्पैर्
भूपांशवः खे मिहिका द्युभासः ॥२१९ ॥

नित्यगुणो वनमाली यद् अपि शिखामणिर् अशेषनेतृणाम् ।
भक्तापेक्षिकम् अस्य त्रिविधत्वं लिख्यते तद् अपि ॥२२० ॥
हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा ।
श्रेष्ठमध्यादिभिः शब्दैर् नाट्ये यः परिपठ्यते ॥२२१ ॥
प्रकाशिताखिलगुणः स्मृतः पूर्णतमो बुधैः ।
असर्वव्यञ्जकः पूर्णतरः पूर्णो ऽल्पदर्शकः ॥२२२ ॥
कृष्णस्य पूर्णतमता व्यक्ताभूद् गोकुलान्तरे ।
पूर्णता पूर्णतरता द्वारकामथुरादिषु ॥२२३ ॥

स पुनश् चतुर्विधः स्याद् धीरोदात्तश् च धीरललितश् च ।
धीरप्रशान्तनामा तथैव धीरोद्धतः कथितः ॥२२४ ॥
बहुविधगुणक्रियाणाम् आस्पदभूतस्य पद्मनाभस्य ।
तत्तल्लीलाभेदाद् विरुध्यते न हि चतुर्विधाः ॥२२५ ॥

तत्र धीरोदात्तः _
गम्भीरो विनयी क्षन्ता करुणः सुदृढव्रतः ।
अकत्थनो गूढगर्वो धीरोदात्तः सुसत्त्वभृत् ॥२२६ ॥

यथा _
वीरंमन्यमदप्रहारिहसितं धौरेयम् आर्तोद्धृतौ
निर्व्यूढव्रतम् उन्नतक्षितिधरोद्धारेण धीराकृतिम् ।
मय्य् उच्चैः कृतकिल्बिषेऽपि मधुरं स्तुत्या मुहुर् यन्त्रितं
प्रेक्ष्य त्वां मम दुर्वितर्क्यहृदयं धीर् गीश् च न स्पन्दते ॥२२७ ॥

गम्भीरत्वादिसामान्यगुणा यद् इह कीर्तिताः ।
तद् एतेषु तदाधिक्यप्रतिपादनहेतवे ॥२२८ ॥

इदं हि त्तत्वं पूर्वैः प्रोक्तं रघूद्वहे ।
तत्तद्भक्तानुसारेण तथा कृष्णे विलोक्यते ॥२२९॥

धीरललितः _
विदग्धो नवतारुण्यः परिहासविशारदः ।
निश्चिन्तो धीरललितः स्यात् प्रायः प्रेयसीवशः ॥२३० ॥

यथा _
वाचा सूचितशर्वरीरतिकलाप्रागल्भ्यया राधिकां
व्रीडाकुञ्चितलोचनां विरचयन्न् अग्रे सखीनाम् असौ ।
तद्वक्षोरुहचित्रकेलिमकरीपाण्डित्यपारं गतः
कैशोरं सफलीकरोति कलयन् कुञ्जे विहारं हरिः ॥२३१ ॥

गोविन्दे प्रकटं धीरललितत्वं प्रदर्श्यते ।
उदाहरन्ति नाटयज्ञाः प्रायोऽत्र मकरध्वजम् ॥२३२ ॥

धीरशान्तः _
शमप्रकृतिकः क्लेशसहनश् च विवेचकः ।
विनयादिगुणोपेतो धीरशान्त उदीर्यते ॥२३३ ॥

यथा _
विनयमधुरमूर्तिर् मन्थरस्निग्धतारो
वचनपटिमभङ्गीसूचिताशेषनीतिः ।
अभिदधद् इह धर्मं धर्मपुत्रोपकण्ठे
द्विजपतिर् इव साक्षात् प्रेक्ष्यते कंसवैरी ॥२३४ ॥

युधिष्ठिरादिको धीरैर् धीरशान्तः प्रकीर्तितः ॥२३५ ॥

धीरोद्धतः _
मात्सर्यवान् अहङ्कारी मायावी रोषणश् चलः ।
विकत्थनश् च विद्वद्भिर् धीरोद्धत उदाहृतः ॥२३६ ॥

यथा _
आः पापिन् यवनेन्द्र दर्दुर पुनर् व्याघुटय सद्यस् त्वया
वासः कुत्रचिद् अन्धकूपकुहरक्रोडेऽद्य निर्मीयताम् ।
हेलोत्तानितदृष्टिमात्रभसितब्रह्माण्डाण्डः पुरो
जागर्मि त्वदुपग्रहाय भुजगः कृष्णोऽत्र कृष्णाभिधः ॥२३७ ॥

धीरोद्धतस् तु विद्वद्भिर् भीमसेनादिर् उच्यते ॥२३८ ॥
मात्सर्याद्याः प्रतीयन्ते दोषत्वेन यद् अप्य् अमी ।
लीलाविशेषशालित्वान् निर्दोषेऽत्रे गुणाः स्मृताः ॥२३९ ॥

यथा वा _
अम्भोभारभरप्रणम्रजलदभ्रान्तिं वितन्वन्न् असौ
घोराडम्बरडम्बरः सुविकुटाम् उत्क्षिप्य हस्तार्गलाम् ।
दुर्वारः परवारणः स्वयम् अहं लब्धोऽस्मि कृष्णः पुरो
रे श्रीदामकुरङ्गसङ्गरभुवो भङ्गं त्वम् अङ्गीकुरु ॥२४० ॥

मिथो विरोधिनोऽप्य् अत्र केचिन् निगदिता गुणाः ।
हरौ निरङ्कुशैश्वर्यात् कोऽपि न स्याद् असम्भवः ॥२४१ ॥

तथा च कौर्मे
अस्थूलश् चाणुश् चैव स्थूलोऽणुश् चैव सर्वतः ।
अवर्णः सर्वतः प्रोक्तः श्यामो रक्तान्तलोचनः ।
ऐश्वर्ययोगाद् भगवान् विरुद्धार्थोऽभिधीयते ॥२४२ ॥
तथापि दोषाः परमे नैवाहार्याः कथञ्चन ।
गुणा विरुद्धा अप्य् एते समाहार्याः समन्ततः ॥२४३ ॥

महावाराहे च _
सर्वे नित्याः शाश्वताश् च देहास् तस्य परात्मनः ।
हानोपादानरहिता नैव प्रकृतिजाः क्वचित् ॥२४४ ॥
परमानन्दसन्दोहा ज्ञानमात्राश् च सर्वतः ।
सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः ॥२४५ ॥

वैष्णवतन्त्रेऽपि _
अष्टादशमहादोषै रहिता भगवत्तनुः ।
सर्वैश्वर्यमयी सत्यविज्ञानानन्दरूपिणी ॥२४६ ॥

अष्टादशमहादोषाः यथा विष्णुयामले _
मोहस् तन्द्रा भ्रमो रुक्षरसता काम उल्बणः ।
लोलता मदमात्सर्ये हिंसा खेदपरिश्रमौ ॥२४७ ॥
असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः ।
विषमत्वं परापेक्षा दोषा अष्टादशोदिताः ॥२४८ ॥

इत्थं सर्वावतारेभ्यस् ततोऽप्य् अत्रावतारिणः ।
व्रजेन्द्रनन्दने सुष्ठु माधुर्यभर ईरितः ॥२४९ ॥

तथा च ब्रह्मसंहितायाम् आदिपुरुषरहस्ये 5.59 _
यस्यैकनिश्वसितकालम् अथावलम्ब्य
जीवन्ति लोमबिलजा जगदण्डनाथाः ।

विष्णुर् महान् स इह यस्य कलाविशेषो
गोविन्दम् आदिपुरुषं तम् अहं भजामि ॥२५० ॥

अथाष्टाव् अनुकीर्त्यन्ते सद्गुणत्वेन विश्रुताः ।
मङ्गलालङ्क्रियारूपाः सत्त्वभेदास् तु पौरुषाः ॥२५१ ॥
शोभा विलासो माधुर्यं माङ्गल्यं स्थैर्यतेजसी ।
ललितौदार्यम् इत्य् एते सत्त्वभेदास् तु पौरुषाः ॥२५२ ॥

तत्र शोभा _
नीचे दयाधिके स्पर्धा शौर्योत्साहौ च दक्षता ।
सत्यं च व्यक्तिम् आयाति यत्र शोभेति तां विदुः ॥२५३ ॥

यथा _
स्वर्गध्वंसं विधित्सुर् व्रजभुवि कदनं सुष्ठु वीक्ष्यातिवृष्ट्या
नीचान् आलोच्य पश्चान् नमुचिरिपुमुखानूढकारुण्यवीचिः ।
अप्रेक्ष्य स्वेन तुल्यं कम् अपि निजरुषाम् अत्र पर्याप्तिपात्रं
बन्धून् आनन्दयिष्यन्न् उदहरतु हरिः सत्यसन्धो महाद्रिम् ॥२५४ ॥

विलासः _
वृषभस्येव गम्भीरा गतिर् धीरं च वीक्षणम् ।
सस्मितं च वचो यत्र स विलास इतीर्यते ॥२५५ ॥

यथा _
मल्लश्रेण्याम् अविनयवतीं मन्थरां न्यस्य दृष्टिं
व्याधुन्वानो द्विप इव भुवं विक्रमाडम्बरेण ।
वागारम्भे स्मितपरिमलैः क्षालयन् मञ्चकक्षां
तुङ्गे रङ्गस्थलपरिसरे सारसाक्षः ससार ॥२५६ ॥

माधुर्यम् _
तन् माधुर्यं भवेद् यत्र चेष्टादेः स्पृहणीयता ॥२५७ ॥

यथा _
वराम् अध्यासीनस् तटभुवम् अवष्टम्भरुचिभिः
कदम्बैः प्रालम्बं प्रवलितविलम्बं विरचयन् ।
प्रपन्नायाम् अग्रे मिहिरदुहितुस् तीर्थपदवीं
कुरङ्गीनेत्रायां मधुरिपुर् अपाङ्गं विकिरति ॥२५८ ॥

माङ्गल्यम् _
माङ्गल्यं जगताम् एव विश्वासास्पदता मता ॥२५९ ॥

यथा _
अन्याय्यं न हराव् इति व्यपगतद्वारार्गला दानवा
रक्षी कृष्ण इति प्रमत्तम् अभितः क्रीडासु रक्ताः सुराः ।
साक्षी वेत्ति स भक्तिम् इत्य् अवनतव्राताश् च चिन्तोज्झिताः
के विश्वम्भर न त्वदङ्घ्रियुगले विश्रम्भितां भेजिरे ॥२६० ॥

स्थैर्यम् _
व्यवसायाद् अचलनं स्थैर्यं विघ्नाकुलाद् अपि ॥२६१ ॥

यथा _
प्रतिकुलेऽपि सशूले शिवे शिवायां निरंशुकायां च ।
व्यलुनाद् एव मुकुन्दो विन्ध्यावलिनन्दनस्य भुजान् ॥२६२ ॥

तेजः _
सर्वचित्तावगाहित्वं तेजः सद्भिर् उदीर्यते ॥२६३ ॥

यथा श्रीदशमे 10.43.17 _
मल्लानाम् अशनिर् नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपानां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः ।
मृत्युर् भोजपतेर् विराड् अविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गः गतः साग्रजः ॥२६४ ॥

यथा __
तेजो बुधैर् अवज्ञादेर् असहिष्णुत्वम् उच्यते ॥२६५ ॥

यथा _
आक्रुष्टे प्रकटं दिदण्डयिषुणा चण्डेन रङ्गस्थले
नन्दे चानकदुन्दुभौ च पुरतः कंसेन विश्वद्रुहा ।
दृष्टिं तत्र सुरारिमृत्युकुलटासम्पर्कदूतीं क्षिपन्
मञ्चस्योपरि सञ्चुकुर्दिषुर् असौ पश्याच्युतः प्राञ्चति ॥२६६ ॥

ललितम् _
शृङ्गारप्रचुरा चेष्टा यत्र तं ललितं विदुः ॥२६७ ॥

यथा
विधत्ते राधायाः कुचमुकुलयोः केलिमकरीं
करेण व्यग्रात्मा सरभसम् असव्येन रसिकः ।
अरिष्टे साटोपं कटु रुवति सव्येन विहसन्न्
उदञ्चद्रोमाञ्चं रचयति च कृष्णः परिकरम् ॥२६८ ॥

औदार्यम् _
आत्माद्यर्पणकारित्वम् औदार्यम् इति कीर्त्यते ॥२६९॥

यथा
वदान्यः को भवेद् अत्र वदान्यः पुरुषोत्तमात्।
अकिञ्चनाय येनात्मा निर्गुणायापि दीयते ॥२७०॥

सामान्या नायकगुणाः स्थिरताद्या यद् अप्य् अमी।
तथापि पूर्वतः किञ्चिद् विशेषात् पुनर् ईरिताः ॥२७१॥

अथास्य सहायाः _
अस्य गर्गादयो धर्मे युयुधानादयो युधि।
उद्धवाद्यास् तथा मन्त्रे सहायाः परिकीर्तिताः ॥२७२॥

अथ कृष्णभक्ताः _
तद्भावभावितस्वान्ताः कृष्णभक्ता इतीरिताः ॥२७३॥
यो सत्यवाक्य इत्य् आद्या ह्रीमान् इत्य् अन्तिमा गुणाः।
प्रोक्ताः कृष्णेऽस्य भक्तेषु ते विज्ञेया मनीषिभिः ॥२७४॥
ते साधकाश् च सिद्धाश् च द्विविधाः परिकीर्तिताः ॥२७५॥

तत्र साधकाः _
उत्पन्नरतयः सम्यङ् नैर्विघ्न्यम् अनुपागताः।
कृष्णसाक्षात्कृतौ योग्याः साधकाः परिकीर्तिताः ॥२७६॥

यथैकादशे 11.2.46 _
ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यमः ॥२७७॥

यथा वा _
सिक्ताप्य् अश्रुजलोत्करेण भगवद्वार्तानदीजन्मना
तिष्ठत्य् एव भवाग्निहेतिर् इति ते धीमन्न् अलं चिन्तया।
हृद्व्योमन्य् अमृतस्पृहाहरकृपावृष्टेः स्फुटं लक्ष्यते
नेदिष्टः पृथुरोमताण्डवभरात् कृष्णाम्बुधस्योद्गमः ॥२७८॥

बिल्वमङ्गलतुल्या ये साधकास् ते प्रकीर्तिताः ॥२७९॥

अथ सिद्धाः _
अविज्ञाताखिलक्लेशाः सदा कृष्णाश्रितक्रियाः।
सिद्धाः स्युः सन्ततप्रेमसौख्यास्वादपरायणाः ॥२८०॥
सम्प्राप्तसिद्धयः सिद्धा नित्यसिद्धाश् च ते त्रिधा ॥२८१॥

तत्र सम्प्राप्तसिद्धयः _
साधनैः कृपया चास्य द्विधा सम्प्राप्तसिद्धयः ॥२८२॥

तत्र साधनसिद्धाः यथा तृतीये 3.15.25 _
यच् च व्रजन्त्य् अनिमिषाम् ऋषभानुवृत्त्या
दूरे यमा ह्य् उपरि नः स्पृहणीयशीलाः।
भर्तुर् मिथः सुयशसः कथनानुराग
वैक्लव्यबाष्पकलया पुलकीकृताङ्गाः ॥२८३॥

यथा वा _
ये भक्तिप्रभविष्णुताकवलितक्लेशोर्मयः कुर्वते
दृक्पातेऽपि घृणां कृतप्रणतिषु प्रायेण मोक्षादिषु।
तान् प्रेमप्रसरोत्सवस्तवकितस्वान्तान् प्रमोदाश्रुभिर्
निर्धौतास्यतटान् मुहुः पुलकिनो धन्यान् नमस्कुर्महे ॥२८४॥

मार्कण्डेयादयः प्रोक्ताः साधनैः प्राप्तसिद्धयः ॥२८५॥

अथ कृपासिद्धाः यथा श्रीदशमे 10.23.4243 _
नासां द्विजातिसंस्कारो न निवासो गुराव् अपि।
न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः ॥२८६॥
अथापि ह्य् उत्तमःश्लोके कृष्णे योगेश्वरेश्वरे।
भक्तिर् दृढा न चास्माकं संस्कारादिमताम् अपि ॥२८७॥

यथा वा _
न काचिद् अभवद् गुरोर् भजनयन्त्रणेऽभिज्ञता
न साधनविधौ च ते श्रमलवस्य गन्धोऽप्य् अभूत्।
गतोऽसि चरितार्थतां परमहंसमृग्यश्रिया
मुकुन्दपदपद्मयोः प्रणयसीधुनो धारया ॥२८८॥

कृपासिद्धा यज्ञपत्नीवैरोचनिशुकादयः ॥२८९॥

अथ नित्यसिद्धाः _
आत्मकोटिगुणं कृष्णे प्रेमाणं परमं गताः।
नित्यानन्दगुणाः सर्वे नित्यसिद्धा मुकुन्दवत् ॥२९०॥

यथा पाद्मे श्रीभगवत्सत्यभामादेवीसंवादे _
अथ ब्रह्मादिदेवानां तथा प्रार्थनया भुवः।
आगतोऽहं गणाः सर्वे जातास् तेऽपि मया सह ॥२९१॥
एते हि यादवाः सर्वे मद्गणा एव भामिनि।

सर्वदा मत्प्रिया देवि मत्तुल्यगुणशालिनः ॥२९२ ॥

तथा च श्रीदशमे 10.14.32 _
अहो भाग्यम् अहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥२९३ ॥

तत्रैव 10.26.13 _
दुस्त्यजश् चानुरागोऽस्मिन् सर्वेषां नो व्रजौकसाम् ।
नन्द ते तनयेऽस्मासु तस्याप्य् औत्पत्तिकः कथम् ॥२९४ ॥

सनातनं मित्रम् इति तस्याप्य् औत्पत्तिकः कथम् ।
स्नेहोऽस्मास्व् इति चैतेषां नित्यप्रेष्ठत्वम् आगतम् ॥२९५ ॥
इत्य् अतः कथिता नित्यप्रिया यादववल्लवाः ।
एषां लौकिकवच्चेष्टा लीला मुररिपोर् इव ॥२९६ ॥

तथा हि पाद्मोत्तरखण्डे _
यथा सौमित्रिभरतौ यथा सङ्कर्षणादयः ।
तथा तेनैव जायन्ते निजलोकाद् यदृच्छया ॥२९७ ॥
पुनस् तेनैव गच्छन्ति तत्पदं शाश्वतं परम् ।
न कर्मबन्धनं जन्म वैष्णवानां च विद्यते ॥२९८ ॥

ये प्रोक्ताः पञ्चपञ्चाशत् क्रमात् कंसरिपोर् गुणाः ।
ते चान्ये चापि सिद्धेषु सिद्धिदत्वादयो मताः ॥२९९ ॥
भक्तास् तु कीर्तिताः शान्तास् तथा दाससुतादयः ।
सखायो गुरुवर्गाश् च प्रेयस्यश् चेति पञ्चधा ॥ ॥

अथ उद्दीपनाः __
उद्दीपनास् तु ते प्रोक्ता भावम् उद्दीपयन्ति ये ।
ते तु श्रीकृष्णचन्द्रस्य गुणाश् चेष्टाः प्रसाधनम् ॥३०१ ॥
स्मिताङ्गसौरभे वंशशृङ्गनूपुरकम्बवः ।
पदाङ्कक्षेत्रतुलसीभक्ततद्वासरादयः ॥३०२ ॥

तत्र गुणाः _
गुणास् तु त्रिविधाः प्रोक्ताः कायवाङ्मानसाश्रयाः ॥३०३ ॥

तत्र कायिकाः _
वयःसौन्दर्यरूपाणि कायिकामृदुतादयः ॥३०४ ॥
गुणाः स्वरूपम् एवास्य कायिकाद्या यदप्य् अमी ।
भेदं स्वीकृत्य वर्ण्यन्ते तथाप्य् उद्दीपना इति ॥३०५ ॥
अतस् तस्य स्वरूपस्य स्याद् आलम्बनतैव हि ।
उद्दीपनत्वम् एव स्याद् भूषणादेस् तु केवलम् ॥३०६ ॥
एषाम् आलम्बनत्वं च तथोद्दीपनतापि च ॥३०७ ॥

तत्र वयः _
वयः कौमारपौगण्डकैशोरम् इति तत् त्रिधा ॥३०८ ॥
कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि ।
आषोडशाच् च कैशोरं यौवनं स्यात् ततः परम् ॥३०९ ॥
औचित्यात् तत्र कौमारं वक्तव्यं वत्सले रसे ।
पौगण्डं प्रेयसि तत्तत्खेलादियोगतः ॥३१० ॥
श्रैष्ठ्यम् उज्ज्वल एवास्य कैशोरस्य तथाप्य् अदः ।
प्रायः सर्वरसौचित्याद् अत्रोदाह्रियते क्रमात् ॥३११ ॥
आद्यं मध्यं तथा शेषं कैशोरं त्रिविधं भवेत् ॥३१२ ॥

तत्र आद्यम् _
वर्णस्योज्ज्वलता कापि नेत्रान्ते चारुणच्छविः ।
रोमावलिप्रकटता कैशोरे प्रथमे सति ॥३१३ ॥

तथा _
हरति शितिमा कोऽप्य् अङ्गानां महेन्द्रमणिश्रियं
प्रविशति दृशोर् अन्ते कान्तिर् मनाग् इव लोहिनी ।
सखि तनु रुहां राजिः सूक्ष्मा दरास्य विरोहते
स्फुरति सुषमा नव्येदानीं तनौ वनमालिनः ॥३१४ ॥

वैजयन्तीशिखण्डादिनटप्रवरवेशता ।
वंशीमधुरिमा वस्त्रशोभा चात्र परिच्छदः ॥३१५ ॥

यथा श्रीदशमे 10.21.5 __
बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं
बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ।
रन्ध्रान् वेणोर् अधरसुधया पूरयन् गोपवृन्दैर्
वृन्दारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥३१६ ॥

खरतात्र नखाग्राणां धनुर् आन्दोलिता भ्रुवोः ।
रदानां रञ्जनं रागचूर्णैर् इत्य् आदि चेष्टितम् ॥३१७ ॥

यथा
नवं धनुर् इवातनोर् नटदघद्विषोर् भ्रूयुगं
शरालिर् इव शाणिता नखरराजिर् अग्रे खरा ।
विराजति शरीरिणी रुचिरदन्तलेखारुणा
न का सखि समीक्षणाद् युवतिर् अस्य वित्रस्यति ॥३१८ ॥

तन्मोहनता यथा _
कर्तुं मुग्धाः स्वयम् अचटुना न क्षमन्तेऽभियोगं
न व्यादातुं क्वचिद् अपि जने वक्रम् अप्य् उत्सहन्ते ।
दृष्ट्वा तास् ते नवमधुरिमस्मेरतां माधवार्ताः
स्वप्राणेभ्यस् त्रयम् उदसृजन्न् अद्य तोयाञ्जलीनाम् ॥३१९ ॥

अथ मध्यमम् _
ऊरुद्वयस्य बाह्वोश् च कापि श्रीर् उरसस् तथा ।
मूर्तेर् माधुरिमाद्यं च कैशोरे सति मध्यमे ॥३२० ॥

यथा _
स्पृहयति करिशुण्डादण्डनायोरुयुग्मं
गरुडमणिकवाटीसख्यम् इच्छत्य् उरश् च ।
भुजयुगम् अपि धित्सत्य् अर्गलावर्गनिन्दाम्
अभिनवतरुणिम्नः प्रक्रमे केशवस्य ॥३२१ ॥

मुखं स्मितविलासाढ्यं विभ्रमोत्तरले दृशौ ।
त्रिजगन्मोहनं गीतम् इत्य् आदिर् इह माधुरी ॥३२२ ॥

यथा _
अनङ्गनयचातुरीपरिचियोत्तरङ्गे दृशौ
मुखाम्बुजम् उदञ्चितस्मितविलासरम्याधरम् ।
अचञ्चलकुलाङ्गनाव्रतविडम्बिसङ्गीतकं
हरेस् तरुणिमाङ्कुरे स्फुरति माधुरी काप्य् अभूत् ॥३२३ ॥

वैदग्धीसारविस्तारः कुञ्जकेलिमहोत्सवः ।
आरम्भो रासलीलादेर् इह चेष्टादिसौष्ठवम् ॥३२४ ॥

यथा _
व्यक्तालक्तपदैः क्वचित् परिलुठत्पिञ्छावतंसैः क्वचित्
तल्पैर् विच्युतकाञ्चिभिः क्वचिद् असौ व्याकीर्णकुञ्जोत्करा ।
प्रोद्यन्मण्डलबन्धताण्डवघटालक्ष्मोल्लसत्सैकता
गोविन्दस्य विलासवृन्दम् अधिकं वृन्दाटवी शंसति ॥३२५ ॥

तन्मोहनता यथा _
विदूरान् माराग्निं हृदयरविकान्ते प्रकटयन्न्
उदस्यन् धर्मेन्दुं विदधद् अभितो रागपटलम् ।
कथं हा नस् त्राणं सखि मुकुलयन् बोधकुमुदं
तरस्वी कृष्णाबभ्रे मधुरिमभरार्कोऽभ्युदयते ॥३२६ ॥

अथ शेषम् _
पूर्वतोऽप्य् अधिकोत्कर्षं बाढम् अङ्गानि बिभ्रति ।
त्रिवलिव्यक्तिर् इत्य् आद्यं कैशोरे चरमे सति ॥३२७ ॥

यथा _
मरकतगिरेर् गण्डग्रावप्रभाहररक्षसं
शतमखमणिस्तम्भारम्भप्रमाथिभुजद्वयम् ।
तनुतरणिजावीचिच्छायाविडम्बिबलित्रयं
मदनकदलीसाधिष्ठोरुं स्मराम्य् असुरान्तकम् ॥३२८ ॥

तन्माधुर्यं यथा _
दशार्धशरमाधुरीदमनदक्षयाङ्गश्रिया
विधूनितवधूधृतिं वरकलाविलासास्पदम् ।
दृगञ्चलचमत्कृतिक्षपितखञ्जरीटद्युतिं
स्फुरत्तरुणिमोद्गमं तरुणि पश्य पीताम्बरम् ॥३२९ ॥

इदम् एव हरेः प्राज्ञैर् नवयौवनम् उच्यते ॥३३० ॥
अत्र गोकुलदेवीनां भावसर्वस्वशालिता ।
अभूतपूर्वकन्दर्पतन्त्रलीलोत्सवादयः ॥३३१ ॥

यथा _
कान्ताभिः कलहायते क्वचिद् अयं कन्दर्पलेखान् क्वचित्
कीरैर् अर्पयति क्वचिद् वितनुते क्रीडाभिसारोद्यमम् ।
सख्या भेदयति क्वचित् स्मरकलाषाड्गुण्यवान् ईहते
सन्धिं क्वाप्य् अनुशास्ति कुञ्जनृपतिः शृङ्गारराज्योत्तमम् ॥३३२ ॥

तन्मोहनता यथा _
कर्णाकर्णि सखीजनेन विजने दूतीस्तुतिप्रक्रिया
पत्युर् वञ्चनचातुरी गुणनिका कुण्डप्रयाण् निशि ।
बाधिर्यं गुरुवाचि वेणुविरुताव् उत्कर्णतेति व्रतान्
कैशोरेण तवाद्य कृष्ण गुरुणा गौरीगणः पठ्यते ॥३३३ ॥

नेतुः स्वरूपम् एवोक्तं कैशोरम् इह यद्यपि ।
नानाकृतिप्रकटनात् तथाप्य् उद्दीपनं मतम् ॥३३४ ॥
बाल्येऽपि नवतारुण्यप्राकट्यं क्वचित् ।
तन् नातिरसवाहित्वान् न रसज्ञैर् उदाहृतम् ॥३३५ ॥

अथ सौन्दर्यम् _
भवेत् सौन्दर्यम् अङ्गानां सन्निवेशो यथोचितम् ॥३३६ ॥

यथा _
मुखं ते दीर्घाक्षं मरकततटीपीवरम् उरो
भुजद्वन्द्वं स्तम्भद्युतिसुवलितं पार्श्वयुगलम् ।
परिक्षीणो मध्यः प्रथिमलहरीहारि जघनं
न कस्याः कंसारे हरति हृदयं पङ्कजदृशः ॥३३७ ॥

अथ रूपम् _
विभूषणं विभूष्यं स्याद् येन तद् रूपम् उच्यते ॥३३८ ॥

यथा _
कृष्णस्य मण्डनततिर् मणिकुण्डलाद्या
नीताङ्गसङ्गतिम् अलङ्कृतये वराङ्गि ।
शक्ता बभूव न मनाग् अपि तद्विधाने
सा प्रत्युत स्वयम् अनल्पम् अलङ्कृतासीत् ॥३३९ ॥

अथ मृदुता _
मृदुता कोमलस्यापि संस्पर्शासहतोच्यते ॥३४० ॥

यथा _
अहह नवाम्बुदकान्तेर् अमुष्य सुकुमारता कुमारस्य ।
अपि नवपल्लवसङ्गाद् अङ्गान्य् अपरज्य शीर्यन्ति ॥३४१ ॥

ये नायकप्रकरणे वाचिका मानसास् तथा ।
गुणाः प्रोक्तान्त एवात्र ज्ञेया उद्दीपना बुधः ॥३४२ ॥

चेष्टा _
चेष्टा रासादिलीलाः स्युस् तथा दुष्टवधादयः ॥३४३ ॥

तत्र रासो यथा _
नृत्यद्गोपनितम्बिनीकृतपरीरम्भस्य रम्भादिभिर्
गीर्वाणीभिर् अनङ्गरङ्गविवशं सन्दृश्यमानश्रियः ।
क्रीडाताण्डवपण्डितस्य परितः श्रीपुण्डरीकाक्ष ते
रासारम्भरसार्थिनो मधुरिमा चेतांसि नः कर्षति ॥३४४ ॥

दुष्टवधो यथा ललितमाधवे 9.50 __
शम्भुर् वृषं नयति मन्दरकन्दरान्तर्
म्लानः सलीलम् अपि यत्र शिरो धुनाने ।
आः कौतुकं कलय केलिलवाद् अरिष्टं
तं दुष्टपुङ्गवम् असौ हरिर् उन्ममाथ ॥३४५ ॥

अथ प्रसाधनम् __
कथितं वसनाकल्पमण्डनाद्यं प्रसाधनम् ॥३४६ ॥

तत्र वसनम् _
नवार्करश्मिकाश्मीरहरितालादिसन्निभम् ।
युगं चतुष्कं भूयिष्ठं वसनं त्रिविधं हरेः ॥३४७ ॥

तत्र युगम् _
परिधानं ससंव्यानं युगरूपम् उदीरितम् ॥३४८ ॥

यथा स्तवावल्यां मुकुन्दाष्टके 3 _
कनकनिवहशोभानन्दि पीतं नितम्बे
तदुपरि नवरक्तं वस्त्रम् इत्थं दधानः ।
प्रियम् इव किल वर्णं रागयुक्तं प्रियायाः
प्रणयतु मम नेत्राभीष्टपूर्तिं मुकुन्दः ॥३४९ ॥

चतुष्कम् _
चतुष्कं कञ्चुकोष्णीषतुन्दबन्धान्तरीयकम् ॥३५० ॥

यथा _
स्मेरास्यः परिहितपाटलाम्बरश्रीश्
छन्नाङ्गः पुरटरुचोरुकञ्चकेन ।
उष्णीषं दधद् अरुणं धटीं च चित्राः
कंसारिर् वहति महोत्सवे मुदं नः ॥३५१ ॥

भूयिष्ठम् _
खण्डिताखण्डितं भूरि नटवेशक्रियोचितम् ।
अनेकवर्णं वसनं भूयिष्ठं कथितं बुधैः ॥३५२ ॥

यथा _
अखण्डितविखण्डितैः सितपिशङ्गनीलारुणैः
पटैः कृतयथोचितप्रकटसन्निवेशोज्ज्वलः ।
अयं करभराट्प्रभः प्रचुररङ्गशृङ्गारितः
करोति करभोरु मे घनरुचिर् मुदं माधवः ॥३५३ ॥

अथ आकल्पः _
केशबन्धनम् आलेपो मालाचित्रविशेषकः ।
ताम्बूलकेलिपद्मादिर् आकल्पः परिकीर्तितः ॥३५४ ॥
स्याज् जूटः कवरी चूडा वेणी च कचबन्धनम् ।

पाण्डुरः कर्बुरः पीत इत्य् आलेपस् त्रिधा मतः ॥३५५॥
माला त्रिधा वैजयन्ती रत्नमाला वनस्रजः।
अस्या वैकक्षकापीडप्रालम्बाद्या भिदा मताः ॥३५६॥
मकरीपत्रभङ्गाढ्यं चित्रं पीतसितारुणम्।
तथा विशेषकोऽपि स्याद् अन्यद् ऊह्यं स्वयं बुधैः ॥३५७॥

यथा _
ताम्बूलस्फुरदाननेन्दुर् अमलं धंमिल्लम् उल्लासयन्
भक्तिच्छेदलसत्सुघृष्टघुसृणालेपश्रिया पेशलः।
तुङ्गोरःस्थलपिङ्गलस्रग् अलिकभ्राजिष्णुपत्राङ्गुलिः
श्यामाङ्गद्युतिर् अद्य मे सखि दृशोर् दुग्धे मुदं माधवः ॥३५८॥

अथ मण्डनम् _
किरीटं कुण्डले हारश् चतुष्की वलयोर्मयः।
केयूरनूपुराद्यं च रत्नमण्डनम् उच्यते ॥३५९॥

यथा _
काञ्ची चित्रा मुकुटम् अतुलं कुण्डले हारिहीरे
हारस् तारो वलयम् अमलं चन्द्राचारुश् चतुष्की।
रम्या चोर्मिर् मधुरिमपूरे नूपुरे चेत्य् अघारेर्
अङ्गैर् एवाभरणपटली भूषिता दोग्धि भूषाम् ॥३६०॥

कुसुमादिकृतं चेदं वन्यमण्डनम् ईरितम्।
धातुचःर्त्तं तिलकं पत्रभङ्गलतादिकम् ॥३६१॥

अथ स्मितं यथा कृष्णकर्णामृते 99 __
अखण्डनिर्वाणरसप्रवाहैर्
विखण्डिताशेषरसान्तराणि।
अयन्त्रितोद्वान्तसुधार्णवानि
जयन्ति शीतानि तव स्मितानि ॥३६२॥

अथ अङ्गसौरभं यथा _
परिमलसरिद् एषा यद् वहन्ती समन्तात्
पुलकयति वपुर् नः काप्य् अपूर्वा मुनीनाम्।
मधुरिपुर् उपरागे तद्विनोदाय मन्ये
कुरुभुवम् अनवद्यामोदसिन्धुर् विवेश ॥३६३॥

अथ वंशः _
ध्यानं बलात् परमहंसकुलस्य भिन्दन्
निन्दन् सुधामधुरिमाणम् अधीरधर्मा।
कन्दर्पशासनधुरां मुहुर् एष शंसन्
वंशीध्वनिर् जयति कंसनिसूदनस्य ॥३६४॥

एष त्रिधा भवेद् वेणुमुरलीवंशिकेत्य् अपि ॥३६५॥

तत्र वेणुः _
पारिकाख्यो भवेद् वेणुर् द्वादशाङ्गुलेर् दैर्घ्यभाक् ॥३६६॥

मुरली _
हस्तद्वयम् इतायामा मुखरन्ध्रसमन्विता।
चतुःस्वरच्छिद्रयुक्ता मुरली चारुनादिना ॥३६७॥

वंशी _
अर्धाङ्गुलान्तरोन्मानं तारादिविवराष्टकम्।
ततः सार्धाङ्गुलाद् यत्र मुखरन्ध्रं तथाङ्गुलम् ॥३६८॥
शिरो वेदाङ्गुलं पुच्छं त्र्यङ्गुलं सा तु वंशिका।
नवरन्ध्रा स्मृता सप्तदशाङ्गुलमिता बुधैः ॥३६९॥
दशाङ्गुलान्तरा स्याच् चेत् सा तारमुखरन्ध्रयोः।
महानन्देति व्याख्याता तथा संमोहिनीति च ॥३७०॥
भवेत् सूर्यान्तरा सा चेत् तत आकर्षिणी मता।
आनन्दिनी तदा वंशी भवेद् इन्द्रान्तरा यदि ॥३७१॥
गोपानां वल्लभा सेयं वंशुलीति च विश्रुता।
क्रमान् मणिमयी हैमी वैणवीति त्रिधा च सा ॥३७२॥

अथ शृङ्गम् _
शृङ्गं तु गवलं हेमनिबद्धाग्रिमपश्चिमम्।
रत्नजालस्फुरन्मध्यं मन्द्रघोषाभिधं स्मृतम् ॥३७३॥

यथा _
तारावली वेणुभुजङ्गमेन
तारावलीलागरलेन दष्टा।
विषाणिकानादपयो निपीय
विषाणि कामं द्विगुणीचकार ॥३७४॥

अथ नूपुरं यथा _
अघमर्दनस्य सखि नूपुरध्वनिं
निशमय्य सम्भृतगभीरसम्भ्रमा।
अहम् ईक्षणोत्तरलितापि नाभवं
बहिर् अद्य हन्त गुरवः पुरः स्थिताः ॥३७५॥

अथ कम्बुः _
कम्बुस् तु दक्षिणावर्तः पाञ्चजन्यतयोच्यते ॥३७६ ॥

यथा _
अमररिपुवधूटीभ्रूणहत्याविलासी
त्रिदिवपुरपुरन्ध्रीवृन्दनान्दीकरोऽयम् ।
भ्रमति भुवनमध्ये माधवाध्मातधाम्नः
कृतपुलककदम्बः कम्बुराजस्य नादः ॥३७७ ॥

अथ पदाङ्कः यथा श्रीदशमे 10.38.26 _
तद्दर्शनाह्लादविवृद्धसम्भ्रमः
प्रेम्णोर्ध्वरोमाश्रुकलाकुलेक्षणः ।
रथाद् अवस्कन्द्य स तेष्व् अचेष्टत
प्रभोर् अमून्य् अङ्घ्रिरजांस्य् अहो इति ॥३७८ ॥

यथा वा _
कलयत हरिर् अध्वना सखायः
स्फुटम् अमुना यमुनातटीम् अयासीत् ।
हरति पदततिर् यदक्षिणी मे
ध्वजकुलिशाकुशपङ्कजाङ्कितेयम् ॥३७९ ॥

अथ क्षेत्रम् यथा _
हरिकेलिभुवां विलोकनं
बत दूरेऽस्तु सुदुर्लभश्रियाम् ।
मथुरेत्य् अपि कर्णपद्धतिं
प्रविशन् नाम मनो धिनोति नः ॥३८० ॥

अथ तुलसी यथा बिल्वमङ्गले७ __
अयि पङ्कजनेत्रमौलिमाले
तुलसीमञ्जरि किञ्चिद् अर्थयामि ।
अवबोधय पार्थसारथेस् त्वं
चरणाब्जशरणाभिलाषिणं माम् ॥३८१ ॥

अथ भक्तो यथा चतुर्थे 4.12.21 _
विज्ञाय ताव् उत्तमगायकिङ्कराव्
अभ्युत्थितः साध्वसविस्मृतक्रमः ।
ननाम नामानि गृणन् मधुद्विषः
पार्षत्प्रधानाव् इति संहताञ्जलिः ॥३८२ ॥

यथा वा _
सुबल भुजभुजङ्गं न्यस्य तुङ्गे तवांसे
स्मितविलसदपाङ्गः प्राङ्गणे भ्राजमानः ।
नयनयुगम् असिञ्चद् यः सुधावीचिभिर् नः
कथय स दयितस् ते क्वायम् आस्ते वयस्यः ॥३८३ ॥

अथ तद्वासरो यथा _
अद्भुता बहवः सन्तु भगवत्पर्ववासराः ।
आमोदयति मां धन्या कृष्णभाद्रपदाष्टमी ॥३८४ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ दक्षिणविभागे
भक्तिरससामान्यनिरूपणे विभावलहरी प्रथमा ।
२।२
अनुभावाख्या द्वितीयलहरी

अनुभावास् तु चित्तस्थभावानाम् अवबोधकाः ।
ते बहिर् विक्रिया प्रायाः प्रोक्ता उद्भास्वराख्यया ॥१ ॥
नृत्यं विलुठितं गीतं क्रोशनं तनुमोटनम् ।
हुङ्कारो जृम्भणं श्वासभूमा लोकानपेक्षिता ।
लालास्रवोऽट्टहासश् च घूर्णाहिक्कादयोऽपि च ॥२ ॥
ते शीताः क्षेपणाश् चेति यथार्थाख्या द्विधोदिताः ।
शीताः स्युर् गीतजृम्भाद्या नृत्याद्याः क्षेपणाभिधाः ॥३ ॥

तत्र नृत्यं यथा _
मुरलीखुरलीसुधाकिरं
हरिवक्त्रेन्दुम् अवेक्ष्य कम्पितः ।
गणने सगणेशडिण्डिम
ध्वनिभिस् ताण्डवम् आश्रितो हरः ॥४ ॥

विलुठितं यथा तृतीये 3.1.32
कच्चिद् बुधः स्वस्त्यनमीव आस्ते
श्वफल्कपुत्रो भगवत्प्रपन्नः ।
यः कृष्णपादाङ्कितमार्गपांसुष्व्
अचेष्टत प्रेमविभिन्नधैर्यः ॥५ ॥

यथा वा _
नवानुरागेण तवावशाङ्गी
वनस्रगामोदम् अवाप्य मत्ता ।
व्रजाङ्गने सा कठिने लुठन्ती
गात्रं सुगात्री व्रणयाञ्चकार ॥६ ॥

गीतं यथा _
रागडम्बरकरम्बितचेताः
कुर्वती तव नवं गुणगानम्।
गोकुलेन्द्र कुरुते जलतां सा
राधिकाद्यदृषदां सुहृदां च ॥७॥

क्रोशनं यथा _
हरिकीर्तनजातविक्रियः
स विचुक्रोश तथाद्य नारदः।
अचिरान् नरसिंहशङ्कया
दनुजा येन धृता विलिल्यिरे ॥८॥

यथा वा _
उररीकृतकाकुर् आकुला
कररीव व्रजराजनन्द।
मुरलीतरलीकृतान्तरा
मुहुर् आक्रोशद् इहाद्य सुन्दरी ॥९॥

तनुमोचनं यथा _
कृष्णनामनि मुदोपवीणिते
प्रीणिते मनसि वैणिको मुनिः।
उद्भटं किम् अपि मोटयन्
वपुस् त्रोटयत्य् अखिलयज्ञसूत्रकम् ॥१०॥

हुङ्कारो यथा _
वैणवध्वनिभिर् उद्भ्रमद्धियः
शङ्करस्य दिवि हुङ्कृतिस्वनः।
ध्वंसयन्न् अपि मुहुः स दानवं
साधुवृन्दम् अकरोत् सदा नवम् ॥११॥

जृम्भणम् यथा _
विस्तृतकुमुदवनेऽस्मिन्न्
उदयति पूर्णे कलानिधौ पुरतः।
तव पद्मिनि मुखपद्मं
भजते जृम्भाम् अहो चित्रम् ॥१२॥

श्वासभूमा यथा _
उपस्थिते चित्रपटाम्बुदागमे
विवृद्धतृष्णा ललिताख्यचातकी।
निःश्वासझञ्झामरुतापवाहितं
कृष्णाम्बुदाकारम् अवेक्ष्य चुक्षुभे ॥१३॥

लोकानपेक्षिता यथा श्रीदशमे 10.23.41 __
अहो पश्यत नारीणाम् अपि कृष्णे जगद्गुरौ।
दुरन्तभावं योऽविध्यन् मृत्युपाशान् गृहाभिधान् ॥१४॥

यथा वा पद्यावल्याम् 73 _
परिवदतु जनो यथा तथा वा
ननु मुखरो न वयं विचारयामः
हरिरसमदिरा मदातिमत्ता
भुवि विलुठाम नटाम निर्विशाम ॥१५॥

लालास्रवो यथा _
शङ्के प्रेमभुजङ्गेन दष्टः कष्टं गतो मुनिः।
निश्चलस्य यद् एतस्य लाला स्रवति वक्त्रतः ॥१६॥

अट्टहासः _
हासाद् भिन्नोऽट्टहासोऽयं चित्तविक्षेपसम्भवः ॥१७॥

यथा _
शङ्के चिरं केशवकिङ्करस्य
चेतस् तटे भक्तिलता प्रफुल्ला।
येनाधितुण्डस्थलम् अट्टहास
प्रसूनपुञ्जाश् चटुलं स्खलन्ति ॥१८॥

घूर्णा यथा _
ध्रुवम् अघरिपुर् आदधाति वात्यां
ननु मुरलि त्वयि फुत्कृतिच्छलेन।
किम् अयम् इतरथा ध्वनिर् विघूर्णनं
सखि तव घूर्णयति व्रजाम्बुजाक्षीः ॥१९॥

हिक्का यथा _
न पुत्रि रचयौषधं विसृज रोमम् अत्युद्धतं
मुधा प्रियसखीं प्रति त्वम् अशिवं किम् आशङ्कसे।
हरिप्रणयविक्रियाकुलतया ब्रुवाणा मुहुर्
वराक्षि हरिर् इत्य् असौ वितनुतेऽद्य हिक्काभरम् ॥२०॥

वपुर् उत्फुल्लतारक्तोद्गमाद्याः स्युः परेऽपि ये।
अतीवविरलत्वात् ते नैवात्र परिकीर्तिताः ॥२१॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ दक्षिणविभागे
भक्तिरससामान्यनिरूपणेऽनुभावलहरी द्वितीया ।

२।३
सात्त्विकाख्या तृतीयलहरी

कृष्नसम्बन्धिभिः साक्षात् किञ्चिद् वा व्यवधानतः ।
भावैश् चित्तम् इहाक्रान्तं सत्त्वम् इत्य् उच्यते बुधैः ॥१॥
सत्त्वाद् अस्मात् समुत्पन्ना ये ये भावास् ते तु सात्त्विकाः ।
स्निग्धा दिग्धास् तथा रुक्षा इत्य् अमी त्रिविधा मताः ॥२॥

तत्र स्निग्धाः __
स्निग्धास् तु सात्त्विका मुख्या गौणाश् चेति द्विधा मताः ॥३॥

तत्र मुख्याः __
आक्रमान् मुख्यया रत्या मुख्याः स्युः सात्त्विका अमी ।
विज्ञेयः कृष्णसम्बन्धः साक्षाद् एवात्र सूरिभिः ॥४॥

यथा _
कुन्दैर् मुकुन्दाय मुदा सृजन्ती
स्रजां वरां कुन्दविडम्बिदन्ती ।
बभूव गान्धर्वरसेन वेणोर्
गान्धर्विका स्पन्दनशून्यगात्री ॥५॥

मुख्यः स्तम्भोऽयम् इत्थं ते ज्ञेयाः स्वेदादयोऽपि च ॥६॥

अथ गौणाः _
रत्याक्रमणतः प्रोक्ता गौणास् ते गौणभूतया ।
अत्र कृष्णस्य सम्बन्धः स्यात् किञ्चिद् व्यवधानतः ॥७॥

यथा _
स्वविलोचनचातकाम्बुदे
पुरि नीते पुरुषोत्तमे पुरा ।
अतिताम्रमुखी सगद्गदं
नृपम् आक्रोशति गोकुलेश्वरी ॥८॥
इमौ गौणौ वैवर्ण्यस्वरभेदौ ।

अथ दिग्धाः _
रतिद्वयविनाभूतैर् भावैर् मनस आक्रमात् ।
जने जातरतौ दिग्धास् ते चेद् रत्यनुगामिनः ॥९॥

यथा _
पूतनाम् इह निशाम्य निशायां
सा निशान्तलुठदुद्भटगात्रीम् ।
कम्पिताङ्गलतिका व्रजराज्ञी
पुत्रम् आकुलमतिर् विचिनोति ॥१०॥

कम्पो रत्यनुगामित्वाद् असौ दिग्ध इतीर्यते ॥११॥

रुक्षाः _
मधुराश्चर्यतद्वार्तोत्पन्नैर् मुद्विस्मयादिभिः ।
जाता भक्तोपमे रुक्षा रतिशून्ये जने क्वचित् ॥१२॥

यथा _
भोगैकसाधनजुषा रतिगन्धशून्यं
स्वं चेष्टया हृदयम् अत्र विवृण्वतोऽपि ।
उल्लासिनः सपदि माधवकेलिगीतैस्
तस्याङ्गम् उत्पुलकितं मधुरैस् तदासीत् ॥१३॥

रुक्ष एष रोमाञ्चाः _
रुक्षोऽयं रतिशून्यत्वाद् रोमाञ्चं कथितो बुधैः ।
मुमुक्षुप्रभृतो पूर्वं यो रताभ्यास ईरितः ॥१४॥
चित्तं सत्त्वीभवत् प्राणे न्यस्यत्य् आत्मानम् उद्भटम् ।
प्राणस् तु विक्रियां गच्छन् देहं विक्षोभयत्य् अलम् ।
तदा स्तम्भादयो भावा भक्तदेहे भवन्त्य् अमी ॥१५॥
ते स्तम्भस्वेदरोमाञ्चाः स्वरभेदोऽथ वेपथुः ।
वैवर्ण्यम् अश्रु प्रलय इत्य् अष्टौ सात्त्विकाः स्मृताः ॥१६॥
चत्वारि क्ष्मादिभूतानि प्राणो जात्व् अवलम्बते ।
कदाचित् स्वप्रधानः सन् देहे चरति सर्वतः ॥१७॥
स्तम्भं भूमिस्थितः प्राणस् तनोत्य् अश्रुजलाश्रयः ।
तेजस्थः स्वेदवैवर्ण्ये प्रलयं वियदाश्रयः ॥१८॥
स्वस्थ एव क्रमान् मन्दमध्यतीव्रत्वभेदभाक् ।
रोमाञ्चकम्पवैवर्ण्याण्य् अत्र त्रीणि तनोत्य् असौ ॥१९॥
बहिर् अन्तश् च विक्षोभविधायित्वाद् अतः स्फुटम् ।
प्रोक्तानुभावतामीषां भावता च मनीषिभिः ॥२०॥

तत्र स्तम्भः _
स्तम्भो हर्षभयाश्चर्यविषादामर्षसम्भवः ।
तत्र वागादिराहित्यं नैश्चल्यं शून्यतादयः ॥२१॥

तत्र हर्षाद् यथा तृतीये 3.2.14
यस्यानुरागप्लुतहाससरास
लीलावलोकप्रतिलब्धमानाः।
व्रजस्त्रियो दृग्भिर् अनुप्रवृत्त
धियो ऽवतस्थुः किल कृत्यशेषाः ॥२२॥

भयाद् यथा _
गिरिसन्निभमल्लचक्रुद्धं
पुरतः प्राणपरार्धतः पराध्र्यम्।
तनयं जननी समीक्ष्य शुष्यन्
नयना हन्त बभूव निश्चलाङ्गी ॥२३॥

आश्चर्याद् यथा श्रीदशमे 10.13.56
ततो ऽतिकुतुकोद्वृत्य स्तिमितैकादशेन्द्रियः।
तद्धाम्नाभूद् अजस् तूष्णीं पूर्देव्यन्तीव पुत्रिका ॥२४॥

यथा वा _
शिशोः श्यामस्य पश्यन्ती शैलम् अभ्रंलिहं करे।
तत्र चित्रार्पितेवासीद् गोष्ठी गोष्ठनिवासिनाम् ॥२५॥

विषादाद् यथा _
बकसोदरदानवोदरे
पूरतः प्रेक्ष्य विशन्तम् अच्युतम्।
दिविषन्निकरो विषण्णधीः
प्रकटं चित्रपटायते दिवि ॥२६॥

अमर्षाद् यथा _
कर्तुम् इच्छति मुरद्विषे पुरः
पत्रिमोक्षम् अकृपे कृपीसुते।
सत्वरोऽपि रिपुनिष्क्रये रुषा
निष्क्रियः क्षणम् अभूत् कपिध्वजः ॥२७॥

अथ स्वेदः _
स्वेदो हर्षभयक्रोधादिजः क्लेदकरस् तनोः ॥२८॥

तत्र हर्षाद् यथा _
किम् अत्र सूर्यातपम् आक्षिपन्ती
मुग्धाक्षि चातुर्यम् उरीकरोषि।
ज्ञातं पुरः प्रेक्ष्य सरोरुहाक्षं
स्विन्नासि भिन्ना कुसुमायुधेन ॥२९॥

भयाद् यथा _
कुतुकाद् अभिमन्युवेषिणं
हरिम् आक्रुश्य गिरा प्रगल्भया।
विदिताकृतिर् आकुलः क्षणाद्
अजनि स्विन्नतनुः स रक्तकः ॥३०॥

क्रोधाद् यथा _
यज्ञस्य भङ्गाद् अतिवृष्टिकारिणं
समीक्ष्य शक्रं सरुषो गरुत्मतः।
घनोपरिष्टाद् अपि तिष्ठतस् तदा
निपेतुर् अङ्गाद् घननीरबिन्दवः ॥३१॥

अथ रोमाञ्चः _
रोमाञ्चोऽयं किलाश्चर्यहर्षोत्साहभयादिजः।
रोम्णाम् अभ्युद्गमस् तत्र गात्रसंस्पर्शनादयः ॥३२॥

तत्र आश्चर्याद् यथा __
डिम्भस्य जृम्भां भजतस् त्रीलोकीं
विलोक्य वैलक्ष्यवती मुखान्तः।
बभूव गोष्ठेन्द्रकुटुम्बिनीयं
तनुरुहैः कुड्मलिताङ्गयष्टिः ॥३३॥

हर्षाद् यथा श्रीदशमे 10.30.10 _
किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर् विभासि।
अप्य् अङ्घ्रिसम्भव उरुक्रमविक्रमाद् वा
आहो वराहवपुषः परिरम्भणेन ॥३४॥

उत्साहाद् यथा _
शृङ्गं केलिर् अणारम्भे रणयत्य् अघमर्दने।
श्रीदाम्नो योद्धुकामस्य रेमे रोमाञ्चितं वपुः ॥३५॥

भयाद् यथा _
विश्वरूपधरम् अद्भुताकृतिं
प्रेक्ष्य तत्र पुरुषोत्तमं पुरः।
अर्जुनः सपदि शुष्यदाननः
शिश्रिये विकटकण्टकां तनुम् ॥३६॥

अथ स्वरभेदः _

विसादविस्मयामर्षहर्षभीत्यादिसम्भवम् ।
वैस्वर्यं स्वरभेदः स्याद् एष गद्गदिकादिकृत् ॥३७ ॥

तत्र विषादाद् यथा _
व्रजराज्ञि रथात् पुरो हरिं
स्वयम् इत्य् अर्धविशीर्णजल्पया ।
ह्रियम् एणदृशा गुराव् अपि
श्लथयन्त्या किल रोदिता सखी ॥३८ ॥

विस्मयाद् यथा श्रीदशमे 10.13.64 _
शनैर् अथोत्थाय विमृज्य लोचने
मुकुन्दम् उद्वीक्ष्य विनम्रकन्धरः ।
कृताञ्जलिः प्रश्रयवान् समाहितः
सवेपथुर् गद्गदयैलतेलया ॥३९ ॥

अमर्षाद् यथा तत्रैव 10.29.30 _
प्रेष्ठं प्रियेतरम् इव प्रतिभाषमाणं
कृष्णं तदर्थविनिवर्तितसर्वकामाः ।
नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्
संरम्भगद्गदगिरोऽब्रुवतानुरक्ताः ॥४० ॥

हर्षाद् यथा तत्रैव 10.39.5657
हृष्यत्तनूरुहो भावपरिक्लिन्नात्मलोचनः ॥
गिरा गद्गदयास्तौषीत् सत्त्वम् आलम्ब्य सात्वतः ।
प्रणम्य मूर्ध्नावहितः कृताञ्जलिपुटः शनैः ॥४१ ॥

भीतेर् यथा _
त्वय्य् अर्पितं वितर वेणुम् इति प्रमादी
श्रुत्वा मदीरितम् उदीर्णविवर्णभावः ।
तूर्णं बभूव गुरुगद्गदरुद्धकण्ठः
पत्री मुकुन्द तद् अनेन स हारितोऽस्ति ॥४२ ॥

अथ वेपथुः _
वित्रासामर्षहर्षाद्यैर् वेपथुर् गात्रलौल्यकृत् ॥४३ ॥

तत्र वित्रासेन यथा _
शङ्खचूडम् अधिरूढविक्रमं
प्रेक्ष्य विस्तृतभुजं जिघृक्षया ।
हा व्रजेन्द्रतनयेतिवादिनी
कम्पसम्पदम् अधत्त राधिका ॥४४ ॥

अमर्षेण यथा _
कृष्णाधिक्षेपजातेन व्याकुलो नकुलाम्बुजः ।
चकम्पे द्राग् अमर्षेण भूकम्पे गिरिराड् इव ॥४५ ॥

हर्षेण यथा _
विहससि कथं हताशे पश्य भयेनाद्य कम्पमानास्मि ।
चञ्चलम् उपसीदन्तं निवारय व्रजपतेस् तनयम् ॥४६ ॥

अथ वैवर्ण्यम् _
विषादरोषभीत्यादेर् वैवर्ण्यं वर्णविक्रिया ।
भावज्ञैर् अत्र मालिन्यकार्श्याद्याः परिकीर्तिताः ॥४७ ॥

तत्र विषादाद् यथा _
श्वेतीकृताखिलजनं विरहेण तवाधुना ।
गोकुलं कृष्ण देवर्षेः श्वेतद्वीपभ्रमं दधे ॥४८ ॥

रोषाद् यथा _
कंसशक्रम् अभियुञ्जतः पुरो
वीक्ष्य कंससहजानुदायुधान् ।
श्रीबलस्य सखि तस्य रुष्यतः
प्रोद्यदिन्दुनिभम् आननं बभौ ॥४९ ॥

भीतेर् यथा _
रक्षिते व्रजकुले बकारिणा
पर्वतं वरमुदस्य लीलया ।
कालिमा बलरिपोर् मुखे भवन्न्
ऊचिवान् मनसि भीतिम् उत्थिताम् ॥५० ॥

विषादे श्वेतिमा प्रोक्ता धौसर्यं कालिमा क्वचित् ।
रोषे तु रक्तिमा भीत्यां कालिमा क्वापि शुक्लिमा ॥५१ ॥
रक्तिमा लक्ष्यते व्यक्तो हर्षोद्रेकेऽपि कुत्रचित् ।
अत्रासार्वत्रिकत्वेन नैवास्योदाहृतिः कृता ॥५२ ॥

अथ अश्रु _
हर्षरोषविषादाद्यैर् अश्रु नेत्रे जलोद्गमः ।
हर्षजेऽश्रुणि शीतत्वम् औष्ण्यं रोषादिसम्भवे ।
सर्वत्र नयनक्षोभरागसंमार्जनादयः ॥५३ ॥

अत्र हर्षेण यथा __

गोविन्दप्रेक्षणाक्षेपिबाष्पपूराभिवर्षिणम्।
उच्चैर् अनिन्दद् आनन्दम् अरविन्दविलोचना ॥५४।

रोषेण यथा हरिवंशे 2.66.24 _
तस्याः सुस्राव नेत्राभ्यां वारि प्रणयकोपजम्।
कुशेशयपलाशाभ्याम् अवश्यायजलं यथा ॥५५॥

यथा वा _
भीमस्य चेदीशवधं विधित्सो
रेजेऽश्रुविस्रावि रुषोपरक्तम्।
उद्यन्मुखं वारिकणावकीर्णं
सान्ध्यत्विषा ग्रस्तम् इवेन्दुबिम्बम् ॥५६॥

विषादेन यथा श्रीदशमे 10.60.23 _
पदा सुजातेन नखारुणश्रिया
भुवं लिखन्त्य् अश्रुभिर् अञ्जनासितैः।
आसिञ्चती कुङ्कुमरूषितौ स्तनौ
तस्थाव् अधोमुख्य् अतिदुःखरुद्धवाक् ॥५७॥

अथ प्रलयः _
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः।
अत्रानुभावाः कथिता महीनिपतनादयः ॥५८॥

तत्र सुखेन यथा _
मिलन्तं हरिम् आलोक्य लतापुञ्जाद् अतर्कितम्।
ज्ञप्तिशून्यमना रेजे निश्चलाङ्गी व्रजाङ्गना ॥५९॥

दुःखेन यथा श्रीदशमे 10.39.15 _
अन्याश् च तदनुध्याननिवृत्ताशेषवृत्तयः।
नाभ्यजानन् इमं लोकम् आत्मलोकं गता इव ॥६०॥

सर्वे हि सत्त्वमूलत्वाद् भावा यद्यपि सात्त्विकाः।
तथाप्य् अमीषां सत्त्वैकमूलत्वात् सात्त्विकप्रथा ॥६१॥
सत्त्वस्य तारतम्यात् प्राणतनुक्षोभतारतम्यं स्यात्।
तत एव तारतम्यं सर्वेषां सात्त्विकानां स्यात् ॥६२॥
धूमायितास् ते ज्वलिता दीप्ता उद्दीप्तसंज्ञिताः।
वृद्धिं यथोत्तरं यान्तः सात्त्विकाः स्युश् चतुर्विधाः ॥६३॥
सा भूरिकालव्यापित्वं बह्वङ्गव्यापिताऽपि च।
स्वरूपेण तथोत्कर्ष इति वृद्धिस् त्रिधा भवेत् ॥६४॥
तत्र नेत्राम्बुवैस्वर्यवर्जानाम् एव युज्यते।
बह्वङ्गव्यापितामीषां तयोः कापि विशिष्टता ॥६५॥
तत्राश्रूणां दृगौच्छून्यकारित्वम् अवदातता।
तथा ताराप्तिवैचित्रीवैलक्षण्यविधायिता।
वैस्वर्यस्य तु भिन्नत्वे कौण्ठ्यव्याकुलतादयः ॥६६॥
भिन्नत्वं स्थानविभ्रंशः कौण्ठ्यं स्यात् सन्नकण्ठता।
व्याकुलत्वं तु नानोच्चनीचगुप्तविलुप्तता ॥६७॥
प्रायो धूमायिता एव रुक्षास् तिष्ठन्ति सात्त्विकाः।
स्निग्धास् तु प्रायशः सर्वे चतुर्धैव भवन्त्य् अमी ॥६८॥
महोत्सवादिवृत्तेषु सद्गोष्ठीताण्डवादिषु।
ज्वलन्त्य् उल्लासिनः क्वापि ते रुक्षा अपि कस्यचित् ॥६९॥
सर्वानन्दचमत्कारहेतुर् भावो वरो रतिः।
एते हि तद्विनाभावान् न चमत्कारिताश्रयाः ॥७०॥

तत्र धूमायिताः _
अद्वितीया अमी भावा अथवा सद्वितीयकाः।
ईषद्व्यक्ता अपह्नोतुं शक्या धूमायिता मताः ॥७१॥

यथा _
आकर्णयन्न् अघहराम् अघवैरिकीर्तिं
पक्ष्माग्रमिश्रविरलाश्रुर् अभूत् पुरोधाः।
यष्टा दरोच्छ्वसितलोमकपोलम् ईषत्
प्रस्विन्ननासिकम् उवाह मुखारविन्दम् ॥७२॥

अथ ज्वलिताः _
ते द्वौ त्रयो वा युगपद् यान्तः सुप्रकटां दशाम्।
शक्याः कृच्छ्रेण निह्नोतुं ज्वलिता इति कीर्तिताः ॥७३॥

यथा _
न गुञ्जाम् आदातुं प्रभवति करः कम्पतरलो
दृशौ सास्रे पिञ्छं न परिचिनुतं सत्वरकृति।
क्षमाव् ऊरू स्तब्धौ पदम् अपि न गन्तुं तव सखे
वनाद् वंशीध्वाने परिसरम् अवाप्ते श्रवणयोः ॥७४॥

यथा वा _
निरुद्धं बाष्पाम्भः कथम् अपि मया गद्गदगिरो
ह्रिया सद्यो गूढाः सखि विघटितो वेपथुर् अपि।
गिरिद्रोण्यां वेणौ ध्वनति निपुणैर् इङ्गितमये
तथाप्य् ऊहाञ्चक्रे मम मनसि रागः परिजनैः ॥७५॥

अथ दीप्ताः _

प्रौढां त्रिचतुरा व्यक्तिं पञ्च वा युगपद्गताः ।
संवरीतुम् अशक्यास् ते दीप्ता धीरैर् उदाहृताः ॥७६ ॥

यथा _
न शक्तिम् उपवीणने चिरम् अधत्त कम्पाकुलो
न गद्गदनिरुद्धवाक् प्रभुर् अभूद् उपश्लोकने ।
क्षमोऽजनि न वीक्षणे विगलदश्रुपुरः पुरो
मधुद्विषि परिस्फुरत्य् अवशमूर्तिर् आसीन् मुनिः ॥७७ ॥

यथा वा _
किम् उन्मीलत्य् अस्रे कुसुमजरजो गञ्जसि मुधा
सरोमाञ्चे कम्पे हिमम् अनिलम् आक्रोशसि कुतः ।
किम् ऊरुस्तम्भे वा वनविहरणं द्वेक्षि सखि ते
निराबाधा राधे वदति मदनाधिं स्वरभिदा ॥७८ ॥

अथ उद्दीप्ताः _
एकदा व्यक्तिम् आपन्नाः पञ्चषाः सर्व एव वा ।
आरूढा परमोत्कर्षम् उद्दीप्ता इति कीर्तिताः ॥७९ ॥

यथा _
अद्य स्विद्यति वेपते पुलकिभिर् निस्पन्दताम् अङ्गकैर्
धत्ते काकुभिर् आकुलं विलपति म्लायत्य् अनल्पोष्मभिः ।
स्तिम्यत्य् अम्बुभिर् अम्बकस्तवकितैः पीताम्बरोड्डामरं
सद्यस् तद्विरहेण मुह्यति मुहुर् गोष्ठाधिवासी जनः ॥८० ॥

उद्दीप्ता एव सूद्दिप्ता महाभावे भवन्त्य् अमी ।
सर्व एव परां कोटिं सात्त्विका यत्र बिभ्रति ॥८१ ॥

किं च _
अथात्र सात्त्विकाभासा विलिख्यन्ते चतुर्विधाः ॥८२ ॥
रत्याभासभवास् ते तु सत्त्वाभासभवास् तथा ।
निःसत्त्वाश् च प्रतीपाश् च यथापूर्वम् अमी वराः ॥८३ ॥

तत्र आद्याः _
मुमुक्षुप्रमुखेष्व् आद्या रत्याभासात् पुरोदितात् ॥८४ ॥

यथा _
वाराणसीनिवासी कश्चिद् अयं व्याहरन् हरेश् चरितम् ।
यतिगोष्ठ्याम् उत्पुलकः सिञ्चति गण्डद्वयीम् अस्रैः ॥८५ ॥

अथ सत्त्वाभासभवाः _
मुद्विस्मयादेर् आभासः प्रोद्यन् जात्या श्लथे हृदि ।
सत्त्वाभास इति प्रोक्तः सत्त्वाभासभवास् ततः ॥८६ ॥

यथा _
जरन्मीमांसकस्यापि शृण्वतः कृष्णविभ्रमम् ।
हृष्टायमानमनसो बभूवोत्पुलकं वपुः ॥८७ ॥

यथा वा _
मुकुन्दचरितामृतप्रसरवर्षिणस् ते मया
कथं कथनचातुरीमधुरिमा गुरुर् वर्ण्यताम् ।
मुहूर्तम् अतदर्थिनोऽपि विषयिणोऽपि यस्यानानान्
निशम्य विजयं प्रभोर् दधति बाष्पधाराम् अमी ॥८८ ॥

अथ निःसत्त्वाः _
निसर्गपिच्छिलस्वान्ते तदभ्यासपरेऽपि च ।
सत्त्वाभासं विनापि स्युः क्वाप्य् अश्रुपुलकादयः ॥८९ ॥

यथा _
निशमयतो हरिचरितं न हि सुखदुःखादयोऽस्य हृदि भावाः ।
अनभिनिवेशाज् जाता कथम् अस्रवद् अस्रम् अश्रान्तम् ॥९० ॥

प्रकृत्या शिथिलं येषां मनः पिच्छिलम् एव वा ।
तेष्व् एव सात्त्विकाभासः प्रायः संसदि जायते ॥९१ ॥

अथ प्रतीपाः _
हिताद् अन्यस्य कृष्णस्य प्रतीपाः क्रुद्भयादिभिः ॥९२ ॥

तत्र क्रुधा यथा हरिवंशे 2.30.63८ _
तस्य प्रस्फुरितौष्ठस्य रक्ताधरतटस्य च ।
वक्त्रं कंसस्य रोषेण रक्तसूर्यायते तदा ॥९३ ॥

भयेन यथा _
म्लानाननः कृष्णम् अवेक्ष्य रङ्गे
सिष्वेद मल्लस् त्व् अधिभालशुक्ति ।
मुक्तिश्रियां सुष्ठु पुरो मिलन्त्याम्
अत्यादरात् पाद्यम् इवाजहार ॥९४ ॥

यथा वा _
प्रवाच्यमाने पुरतः पुराणे

निशम्य कंसस्य भयातिरेकम्।
परिप्लवान्तःकरणः समन्तात्
परिम्लानमुखस् तदासीत् ॥९५॥

नास्त्य् अर्थः सात्त्विकाभासकथने कोऽपि यद्यपि।
सात्त्विकानां विवेकाय दिक् तथापि प्रदर्शिता ॥९६॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ दक्षिणविभागे
भक्तिरससामान्यनिरूपणे सात्त्विकलहरी तृतीया।
२।४
व्यभिचार्याख्या चतुर्थलहरी

अथोच्यन्ते त्रयस्त्रिंशद्भावा ये व्यभिचारिणः।
विशेषेणाभिमुख्येन चरन्ति स्थायिनं प्रति ॥१॥
वागङ्गसत्त्वसूच्या ज्ञेयास् ते व्यभिचारिणः।
सञ्चारयन्ति भावस्य गतिं सञ्चारिणो ऽपि ॥२॥
उन्मज्जन्ति निमज्जन्ति स्थायिन्य् अमृतवारिधौ।
ऊर्मिवद् वर्धयन्त्य् एनं यान्ति तद्रूपतां च ते ॥३॥
निर्वेदोऽथ विषादो दैन्यं ग्लानिश्रमौ च मदगर्वौ।
शङ्कात्रासावेगा उन्मादापस्मृती तथा व्याधिः ॥४॥
मोहो मृतिर् आलस्यं जाड्यं व्रीडावहित्था च।
स्मृतिर् अथ वितर्कचिन्तामतिधृतयो हर्ष उत्सुकत्वं च ॥५॥
औग्र्यम् अर्षासूयाश् चापल्यं चैव निद्रा च।
सुप्तिर् बोध इतीमे भावा व्यभिचारिणः समाख्याताः ॥६॥

तत्र 1 निर्वेदः _
महार्तिविप्रयोगेर्ष्यासद्विवेकादिकल्पितम्।
स्वावमाननम् एवात्र निर्वेद इति कथ्यते।
अत्र चिन्ताश्रुवैवर्ण्यदैन्यनिःश्वसितादयः ॥७॥

तत्र महात्यर्ा यथा _
हन्त देहहतकैः किम् अमीभिः
पालितैर् विफलपुण्यफलैर् नः।
एहि कालियह्रदे विषवह्नौ
स्वं कुटुम्बिनि हठाज् जुहवाम ॥८॥

विप्रयोगेण यथा _
असङ्गमान् माधवमाधुरीणाम्
अपुष्पिते नीरसतां प्रयाते।
वृन्दावने शीर्यति हा कुतोऽसौ
प्राणित्य् अपुण्यः सुबलो द्विरेफः ॥९॥

यथा वा दानकेलिकौमुद्याम् 20
भवतु माधवजल्पम् अशृण्वतोः
श्रवणयोर् अलम् अश्रवणिर् मम।
तम् अविलोकयतोर् अविलोचनिः
सखि विलोचनयोश् च किलानयोः ॥१०॥

ईर्ष्यया यथा हरिवंशे 2.67.11९ सत्यादेवीवाक्यम् _
स्तोतव्या यदि तावत् सा नारदेन तवाग्रतः।
दुर्भगोऽयं जनस् तत्र किम् अर्थम् अनुशब्दितः ॥११॥

सद्विवेकेन यथा श्रीदशमे 10.51.47 _
ममैष कालोऽजित निष्फलो गतो
राज्यश्रियोन्नद्धमदस्य भूपतेः।
मर्त्यात्मबुद्धेः सुतदारकोषभूष्व्
आसज्जमानस्य दुरन्तचिन्तया ॥१२॥

अमङ्गलम् अपि प्रोच्य निर्वेदं प्रथमं मुनिः।
मेनेऽमुं स्थायिनं शान्त इति जल्पन्ति केचन ॥१३॥

अथ 2 विषादः _
इष्टानवाप्तिप्रारब्धकार्यासिद्धिविपत्तितः।
अपराधादितोऽपि स्याद् अनुतापो विषण्णता ॥१४॥
अत्रोपायसहायानुसन्धिश् चिन्ता च रोदनम्।
विलापश्वासवैवर्ण्यमुखशोषादयोऽपि च ॥१५॥

तत्र इष्टानवाप्तितो यथा _
जरां याता मूर्तिर् मम विवशतां वाग् अपि गता
मनोवृत्तिश् चेयं स्मृतिविधुरतापद्धतिम् अगात्।
अघध्वंसिन् दूरे वसतु भवदालोकनशशी
मया हन्त प्राप्तो न भजनरुचेर् अप्य् अवसरः ॥१६॥

प्रारब्धकार्यासिद्धेः यथा _
स्वप्ने मयाद्य कुसुमानि किलाहृतानि
यत्नेन तैर् विरचिता वनमालिका च।
यावन् मुकुन्दहृदि हन्त निधीयते सा
हा तावद् एव तरसा विरराम निद्रा ॥१७॥

विपत्तितेः यथा _

कथम् अनायि पुरे मयका सुतः
कथम् असौ न निगृह्य गृहे धृतः।
अमुम् अहो बत दन्तिविधुन्तुदो
विधुरितं विधुम् अत्र विधित्सति ॥१८॥

अपराधात यथा श्रीदशमे 10.14.9 _
पश्येश मेऽनार्यम् अनन्त आद्ये
परात्मनि त्वय्य् अपि मायिमायिनि
मायां वितत्येक्षितुम् आत्मवैभवं
ह्य् अहं कियान् ऐच्छम् इवार्चिर् अग्नौ ॥१९॥

यथा वा _
स्यमन्तकम् अहं हृत्वा गतो घोरास्यम् अन्तकम्।
करवै तरणीं कां वा क्षिप्तो वैतरणीयम् अनु ॥२०॥

अथ 3 दैन्यम् _
दुःखत्रासापराधाद्यैर् अनौर्जित्यं तु दीनता।
चाटुकृन्मान्द्यमालिन्यचिन्ताङ्गजडिमादिकृत् ॥२१॥

तत्र दुःखेन यथा श्रीदशमे 10.51.57 _
चिरम् इह वृजिनार्तस् तप्यमानोऽनुतापैर्
अवितृषषडमित्रो लब्धशान्तिः कथञ्चित्।
शरणद समुपेतस् त्वत्पदाब्जं परात्मन्न्
अभयम् ऋतम् अशोकं पाहि मापन्नम् ईश ॥२२॥

त्रासेन यथा प्रथमे 1.8.10
अभिद्रवति माम् ईश शरस् तप्तायसो विभो।
कामं दहतु मां नाथ मा मे गर्भो निपात्यताम् ॥२३॥

अपराधेन यथा श्रीदशमे 10.14.10
अतः क्षमस्वाच्युत मे रजोभुवो
ह्य् अजानतस् त्वत्पृथगीशमानिनः
अजावलेपान्धतमोऽन्धचक्षुष
एषोऽनुकम्प्यो मयि नाथवान् इति ॥२४॥

आद्यशब्देन लज्जयापि यथा तत्रैव 10.22.14 _
माऽनयं भोः कृथास् त्वां तु नन्दगोपसुतं प्रियम्।
जानीमोऽङ्ग व्रजश्लाघ्यं देहि वासांसि वेपिताः ॥२५॥

अथ 4 म्लानिः _
ओजः सोमात्मकं देहे बलपुष्टिकृद् अस्य तु।
क्षयाच्छम् आधिरत्याद्यैर् ग्लानिर् निष्प्राणता मता।
कम्पाङ्गजाड्यवैवर्ण्यकार्श्यदृग्भ्रमणादिकृत् ॥२६॥

तत्र श्रमेण यथा _
आघूर्णन्मणिवलयोज्ज्वलप्रकोष्ठा
गोष्ठान्तर्मधुरिपुकीर्तिनर्तितौष्ठी।
लोलाक्षी दधिकलसं विलोडयन्ती
कृष्णाय क्लमभरनिःस्पृहा बभूव ॥२७॥

यथा वा _
गुम्फितुं निरुपमां वनस्रजं
चारु पुष्पपटलं विचिन्वती।
दुर्गमे क्लमभरातिदुर्बला
कानने क्षणम् अभून् मृगेक्षणा ॥२८॥

आधिना यथा _
सा रसवत्य् अतिकरेण विहीना
क्षीणजीवनतरोच्चलहंसा।
माधवाद्य विरहेण तवाम्बा
शुष्यति स्म सरसी शुचिनेव ॥२९॥

रत्या यथा रससुधाकरे 2.13f _
अतिप्रयत्नेन रतान्ततान्ता
कृष्णेन तल्पावरोपिता सा।
आलम्ब्य तस्यैव करं करेण
ज्योत्स्नाकृतानन्दम् अलिन्दम् आप ॥३०॥

अथ 5 श्रमः _
अध्वनृत्यरथाद्युत्थः खेदः श्रम इतीर्यते।
निद्रास्वेदाङ्गसंमर्दजृम्भाश्वासादिभाग् असौ ॥३१॥

अथ अध्वनो यथा _
कृतागसं पुत्रम् अनुव्रजन्ती
व्रजाजिरान्तर् व्रजराजराज्ञी।
परिस्खलत्कुन्तलबन्धनेयं
बभूव घर्माम्बुकरम्बिताङ्गी ॥३२॥

नृत्यादेः यथा _
विस्तीर्योत्तरलितहारम् अङ्गहारं

सङ्गीतोन्मुखमुखरैर् वृतः सुहृद्भिः ।
अस्विद्यद् विरचितनन्दसूनुर् वा
कुर्वाणस् तटभुवि ताण्डवानि रामः ॥३३ ॥

रताद् यथा श्रीदशमे 10.33.20
तासाम् अतिविहारेण श्रान्तानां वदनानि सः ।
प्रामृजत् करुणः प्रेम्णा शन्तमेनाङ्ग पाणिना ॥३४ ॥

अथ 6 मदः _
विवेकहर उल्लासो मदः स द्विविधो मतः ।
मधुपानभवोऽनङ्गविक्रियाभरजोऽपि च ।
गत्यङ्गवाणीस्खलनदृग्घूर्णारक्तिमादिकृत् ॥३५ ॥

तत्र मधुपानभवो यथा ललितमाधवे 5.41 __
बिले क्व नु विलिल्यिरे नृपपिपीलिकाः पीडिताः
पिनस्मि जगदण्डकं ननु हरिः क्रुधं धास्यति ।
शचीगृहकुरङ्ग रे हससि किं त्वम् इत्य् उन्नदन्न्
उदेति मदडम्बरस्खलितचूडम् अग्रे हली ॥३६ ॥

यथा वा प्राचाम्१० _
भभभ्रमति मेदिनी लललन्दते चन्द्रमाः
कृकृष्ण ववद द्रुतं हहहसन्ति किं वृष्णयः ।
सिसीधु मुमुमुञ्च मे पपपपानपात्रे स्थितः
मदस्खलितम् आलपन् हलधरः श्रियः वः क्रियात् ॥३७ ॥

उत्तमस् तु मदाच् छेते मध्यो हसति पायति ।
कनिष्ठः क्रोशति स्वैरं पुरुषं वक्ति रोदिति ॥३८ ॥
मदोऽपि त्रिविधः प्रोक्तस् तरुणादिप्रभेदतः ।
अत्र नात्युपयोगित्वाद् विस्तार्य न हि वर्णितः ॥३९ ॥

अनङ्गविक्रियाभरजो यथा _
व्रजपतिसुतम् अग्रे विक्ष्य भुग्नीभवद्भ्रूर्
भ्रमति हसति रोदित्य् आस्यम् अन्तर्दधाति ।
प्रलपति मुहुर् आलीं वन्दते पश्य वृन्दे
नवमदनमदान्धा हन्त गान्धर्विकेयम् ॥४० ॥

अथ 7 गर्वः _
सौभाग्यरूपतारुण्यगुणसर्वोत्तमाश्रयैः ।
इष्टलाभादिना चान्यहेलनं गर्व ईर्यते ॥४१ ॥
अत्र सोल्लुण्ठवचनं लीलानुत्तरदायिता ।
स्वाङ्गेक्षा निह्नुवोऽन्यस्य वचनाश्रवणादयः ॥४२ ॥

तत्र सौभाग्येन यथा श्रीकृष्णकर्णामृते 3.93 _
हस्तम् उत्क्षिप्य यातोऽसि बलात् कृष्ण किम् अद्भुतम् ।
हृदयाद् यदि निर्यासि पौरुषं गणयामि ते ॥४३ ॥

रूपतारुण्येन यथा _
यस्याः स्वभावमधुरां परिषेव्य मूर्तिं
धन्या बभूव नितराम् अपि यवनश्रीः ।
सेयं त्वयि व्रजवधूशतभुक्तमुक्ते
दृक्पातम् आचरतु कृष्ण कथं सखी मे ॥४४ ॥

गुणेन यथा _
गुम्फन्तु गोपाः कुसुमैः सुगन्धिभिर्
दामानि कामं धृतरामणीयकैः ।
निधास्यते किन्तु सतृष्णम् अग्रतः
कृष्णो मदीयां हृदि विस्मितः स्रजम् ॥४५ ॥

सर्वोत्तमाश्रयेण यथा श्रीदशमे 10.2.33
तथा न ते माधव तावकाः क्वचिद्
भ्रश्यन्ति मार्गात् त्वयि बद्धसौहृदाः
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्धसु प्रभो ॥४६ ॥

इष्टलाभेन यथा _
वृन्दावनेन्द्र भवतः परमं प्रसादम्
आसाद्य नन्दितमतिर् मुहुर् उद्धतोऽस्मि ।
आशंसते मुनिमनोरथवृत्तिमृग्यां
वैकुण्ठनाथकरुणाम् अपि नाद्य चेतः ॥४७ ॥

अथ 8 शङ्का
स्वीयचौर्यापराधादेः परक्रौर्यादितस् तथा ।
स्वानिष्टोत्प्रेक्षणं यत् तु सा शङ्केत्य् अभिधीयते ।
अत्रास्यशोषवैवर्ण्यदिक्प्रेक्षालीनतादयः ॥४८ ॥

तत्र चौर्याद् यथा _
सतर्णकं डिम्भकदम्बकं हरन्
सदम्भम् अम्भोरुहसम्भवस् तदा ।
तिरोभविष्यन् हरितश् चलेक्षणैर्
अष्टाभिर् अष्टौ हरितः समीक्षते ॥४९ ॥

यथा वा _
स्यमन्तकं हन्त वमन्तम् अर्थं
निह्नुत्य दूरे यद् अहं प्रयातः।
अवद्यम् अद्यापि तद् एव कर्म
शर्माणि चित्ते मम निर्भिनत्ति ॥५० ॥

अपराधाद् यथा _
तदवधि मलिनोऽसि नन्दगोष्ठे
यदवधि वृष्टिम् अचीकरः शचीश।
शृणु हितम् अभितः प्रपद्य कृष्णं
श्रियम् अविशङ्कम् अलङ्कुरु त्वम् ऐन्द्रीम् ॥५१ ॥

परक्रौर्येण यथा पद्यावल्याम् 331 __
प्रथयति न तथा ममार्तिम् उच्चैः
सहचरि वल्लवचन्द्रविप्रयोगः।
कटुभिर् असुरमण्डलैः परीते
दनुजपतेर् नगरे यथास्य वासः ॥५२ ॥

शङ्का तु प्रवरस्त्रीणां भीरुत्वाद् भयकृद् भवेत् ॥५३ ॥

अथ 9 त्रासः _
त्रासः क्षोभो हृदि तडिद्घोरसत्त्वोग्रनिस्वनैः।
पार्श्वस्थालम्बरोमाञ्चकम्पस्तम्भभ्रमादिकृत् ॥५४ ॥

तत्र तडिता यथा _
बाढं निविडया सद्यस् तडिता ताडितेक्षणः।
रक्ष कृष्णेति चुक्रोश कोऽपि गोपीस्तनन्धयः ॥५५ ॥

घोरसत्त्वेन यथा _
अदूरम् आसेदुषि वल्लवाङ्गना
स्वं पुङ्गवीकृत्य सुरारिपुङ्गवे।
कृष्णभ्रमेणाशु तरङ्गदङ्गिका
तमालम् आलिङ्ग्य बभूव निश्चला ॥५६ ॥

उग्रनिस्वनेन यथा _
आकर्ण्य कर्णपदवीविपदं यशोदा
विस्फूर्जितं दिशि दिशि प्रकटं वृकाणाम्।
यामान् निकामचतुरा चतुरः स्वपुत्रं
सा नेत्रचत्वरचरं चिरम् आचचार ॥५७ ॥

गात्रोत्कम्पी मनःकम्पः सहसा त्रास उच्यते।
पूर्वापरविचारोत्थं भयं त्रासात् पृथग् भवेत् ॥५८ ॥

अथ 10 आवेगः _
चित्तस्य सम्भ्रमो यः स्याद् आवेगोऽयं स चाष्टधा।
प्रियाप्रियानलमरुद्वर्षोत्पातगजारितः ॥५९ ॥
प्रियोत्थे पुलकः सान्त्वं चापल्याभ्युद्गमादयः।
अप्रियोत्थे तु भूपातविक्रोशभ्रमणादयः ॥६० ॥
व्यत्यस्तगतिकम्पाक्षिमीलनास्रादयोऽग्निजे।
वातजेऽजावृतिक्षिप्रगतिदृङ्मार्जनादयः ॥६१ ॥
वृष्टिजो धावनच्छत्रगात्रसङ्कोचनादिकृत्।
औत्पाते मुखवैवर्ण्यविस्मयोऽकण्ठितादयः ॥६२ ॥
गाजे पलायनोत्कम्पत्रासपृष्ठेक्षणादयः।
अरिजो वर्मशस्त्रादिग्रहापसरणादिकृत् ॥६३ ॥

अत्र प्रियदर्शनजो यथा _
प्रेक्ष्य वृन्दावनात् पुत्रम् आयान्तं प्रस्नुतस्तनी।
सङ्कुला पुलकैर् आसीद् आकुला गोकुलेश्वरी ॥६४ ॥

प्रियश्रवणजो यथा श्रीदशमे 10.23.18 _
श्रुत्वाच्युतम् उपायातं नित्यं तद्दर्शनोत्सुकाः।
तत्कथाक्षिप्तमनसो बभूवुर् जातसम्भ्रमाः ॥६५ ॥

अप्रियदर्शनजो यथा _
किम् इदं किम् इदं किम् एतद् उच्चैर्
इति घोरध्वनिघूर्णिता लपन्ती।
निशि वक्षति वीक्ष्य पूतनायास्
तनयं भ्राम्यति सम्भ्रमाद् यशोदा ॥६६ ॥

अप्रियश्रवणजो यथा _
निशम्य पुत्रं क्रटतोस् तटान्ते
महीजयोर् मध्यगम् ऊर्ध्वनेत्रा।
आभीरराज्ञी हृदि सम्भ्रमेण
बिद्धा विधेयं न विदाञ्चकार ॥६७ ॥

अग्निजो यथा _
धीर् व्यग्राजनि नः समस्तसुहृदां तां प्राणरक्षामणिं
गव्या गौरवतः समीक्ष्य निविडे तिष्ठन्तम् अन्तर्वने।
वह्निः पश्य शिखण्डशेखर खरं मुञ्चन्न् अखण्डध्वनिं

दीर्घाभिः सुरदीर्घिकाम्बुलहरीम् अर्चिर्भिर् आचामति ॥६८ ॥

वातजो यथा _
पांशुप्रारब्धकेतौ बृहदटविकुटोन्माथिशौटीर्यपुञ्जे
भाण्डीरोद्दण्डशाखाभुजततिषु गते ताण्डवाचार्यचर्याम् ।
वातव्राते करीषङ्कषतरशिखरे शार्करे झात्करिष्णौ
क्षौण्याम् अप्रेक्ष्य पुत्रं व्रजपतिगृहिणी पश्य सम्बम्भ्रमीति ॥६९ ॥

वर्षजो यथा श्रीदशमे 10.25.11 _
अत्यासारातिवातेन पशवो जातवेपनाः ।
गोपा गोप्यश् च शीतार्ता गोविन्दं शरणं ययुः ॥७० ॥

यथा वा _
समम् उरुकरकाभिर् दन्तिशुण्डासपिण्डाः
प्रतिदिशम् इह गोष्ठे वृष्टिधाराः पतन्ति ।
अजनिषत युवानोऽप्य् आकुलास् त्वं तु बालः
स्फुटम् असि तदगारान् मा स्म भूर् निर्यियासुः ॥७१ ॥

उत्पातजो यथा _
क्षितिर् अतिविपुला टलत्य् अकस्माद्
उपरि घुरन्ति च हन्त घोरम् उल्काः ।
मम शिशुर् अहिदूषितार्कपुत्री
तटम् अटतीत्य् अधुना किम् अत्र कुर्याम् ॥७२ ॥

गाजो यथा _
अपसरापसर त्वरया गुरुर्
मुदिरसुन्दर हे पुरतः करी ।
त्वदिमवीक्षणतस् तव नश् चलं
हृदयम् आविजते पुरयोषिताम् ॥७३ ॥

गजेन दुष्टसत्त्वोऽन्यः पश्चादिर् उपलक्ष्यते ॥७४ ॥

यथा वा _
चण्डांशोस् तुरगान् सटाग्रनटनैर् आहत्य विद्रावयन्
द्राग् अन्धङ्करणः सुरेन्द्रसुदृशां गोष्ठोद्भूतैः पांशुभिः ।
प्रत्यासीदतु मत्पुरः सुररिपुर् गर्वान्धम् अर्वाकृतिर्
द्रगिष्ठे मुहुर् अत्र जाग्रति भुजे व्यग्रासि मातः कथम् ॥७५ ॥

अरिजो यथा ललितमाधवे 2.29 _
स्थूलस् तालभुजान् नतिर् गिरितटीवक्षाः क्व यक्षाधमः
क्वायं बालतमालकन्दलमृदुः कन्दर्पकान्तः शिशुः ।
नास्त्य् अन्यः सहकारितापटुर् इह प्राणी न जानीमहे
हा गोष्ठेश्वरि कीदृग् अद्य तपसां पाकस् तवोन्मीलति ॥७६ ॥

यथा वा तत्रैव 5.30 _
सप्तिः सप्ती रथ इह रथः कुञ्जरो मे
तूणस् तूणो धनुर् उत धनुर् भोः कृपाणी कृपाणी ।
का भीः का भीर् अयम् अयम् अहं हा त्वरध्वं त्वरध्वं
राज्ञः पुत्री बत हृतहृता कामिना वल्लवेन ॥७७ ॥

आवेगाभास एवायं पराश्रयतापि चेत् ।
नायकोत्कर्षबोधाय तथाप्य् अत्र निदर्शितः ॥७८ ॥

अथ 11 उन्मादः _
उन्मादो हृद्भ्रमः प्रौढानन्दापद्विरहादिजः ॥७९ ॥
अत्राट्टहासो नटनं सङ्गीतं व्यर्थचेष्टितम् ।
प्रलापधावनक्रोशविपरीतक्रियादयः ॥८० ॥

तत्र प्रौढानन्दाद् यथा कर्णामृते 2.25 __
राधा पुनातु जगद् अच्युतदत्तचित्ता
मन्थानकं विदधती दधिरिक्तपात्रे ।
यस्याः स्तनस्तवकचञ्चललोचनालिर्
देवोऽपि रुद्धहृदयो धवलं दुदोह ॥८१ ॥

आपदो यथा _
पशून् अपि कृताञ्जलिर् नमति मान्त्रिका इत्य् अलं
तरून् अपि चिकित्सका इति विषौषधं पृच्छति ।
हृदं भुजगभैरवं हरि हरि प्रविष्टे हरौ
व्रजेन्द्रगृहिणी मुहुर् भ्रममयीम् अवस्थां गता ॥८२ ॥

विरहाद् यथा श्रीदशमे 10.30.4 __
गायन्त्य उच्चैर् अमुम् एव संहता
विचिक्युर् उन्मत्तकवद् वनाद् वनम् ।
पप्रच्छुर् आकाशवद् अन्तरं बहिर्
भूतेषु सन्तं पुरुषं वनस्पतीन् ॥८३ ॥

उन्मादः पृथग् उत्कोऽयं व्याधिष्व् अन्तर्भवन्न् अपि ।
यत् तत्र विप्रलम्भादौ वैचित्रीं कुरुते पराम् ॥८४ ॥
अधिरूढे महाभावे मोहनत्वम् उपागते ।
अवस्थान्तरम् आप्तोऽसौ दिव्योन्माद इतीर्यते ॥८५ ॥

अथ 12 अपस्मारः _
दुःखोत्थधातुवैषम्याद्युद्भूतश् चित्तविप्लवः।
अपस्मारोऽत्र पतनं धावनास्फोटनभ्रमाः।
कम्पः फेनस्रुतिर् बाहुक्षेपणविक्रोशनादयः ॥८६ ॥

यथा _
फेनायते प्रतिपदं क्षिपते भुजोर्मिम्
आघूर्णते लुठति कुजति लीयते च।
अम्बा तवाद्य विरहे चिरम् अम्बुराज
बेलेव वृष्णितिलक व्रजराजराज्ञी ॥८७ ॥

यथा वा _
श्रुत्वा हन्त हतं त्वया यदुकुलोत्तंसात्र कंसासुरं
दैत्यस् तस्य सुहृत्तमः परिणतिं घोरां गतः काम् अपि।
लालाफेनकदम्बचुम्बितमुखप्रान्तस् तरङ्गद्भुजो
घूर्णन्न् अर्णवसीम्नि मण्डलतया भ्राम्यन् न विश्राम्यति ॥८८ ॥

उन्मादवद् इह व्याधिविशेषोऽप्य् एष वर्णितः।
परां भयानकाभासे यत् करोति चमत्कृतिम् ॥८९ ॥

अथ 13 व्याधिः _
दोषोद्रेकवियोगाद्यैर् व्याधयो ये ज्वरादयः।
इह तत्प्रभवो भावो व्याधिर् इत्य् अभिधीयते।
अत्र स्तम्भः श्लथाङ्गत्वश्वासोत्तापक्लमादयः ॥९० ॥

यथा _
तव चिरविरहेण प्राप्य पीडाम् इदानीं
दधदुरुजडिमानि ध्मापितान्य् अङ्गकानि।
श्वसितपवनधाटीघङ्कितघ्राणवाटं
लुठति धरणिपृष्ठे गोष्ठवाटीकुटुम्बम् ॥९१ ॥

अथ 14 मोहः _
मोहो हृन्मूढता हर्षाद् विश्लेषाद् भयतस् तथा।
विषादादेश् च तत्र स्याद् देहस्य पतनं भुवि।
शून्येन्द्रियत्वं भ्रमणं तथा निश्चेष्टतामयः ॥९२ ॥

तत्र हर्षाद् यथा श्रीदशमे 10.12.44
इत्थं स्म पृष्टः स तु बादरायणिस्
तत्स्मारितानन्तहृताखिलेन्द्रियः।
कृच्छ्रात् पुनर् लब्धबहिर्दृशिः शनैः
प्रत्याह तं भागवतोत्तमोत्तमम् ॥९३ ॥

यथा वा _
निरुच्छ्वसितरीतयो विघटिताक्षिपक्ष्मक्रिया
निरीहनिखिलेन्द्रियाः प्रतिनिवृत्तचिद्वृत्तयः।
अवेक्ष्य कुरुमण्डले रहसि पुण्डरीकेक्षणं
व्रजाम्बुजदृशोऽभजन् कनकशालभञ्जीश्रियम् ॥९४ ॥

विश्लेषाद् यथा हंसदूते 4 _
कदाचित् खेदाग्निं विघटयितुम् अन्तर्गतम् असौ
सहालीभिर् लेभे तरलितमना यामुनतटीम्।
चिराद् अस्याश् चित्तं परिचितकुटीरकलनाद्
अवस्था तस्तार स्फुटम् अथ सुषुप्तेः प्रियसखी ॥९५ ॥

भयाद् यथा _
मुकुन्दम् आविष्कृतविश्वरूपं
निरूपयन् वानरवर्यकेतुः।
करारविन्दात् पुरतः स्खलन्तं
न गाण्डीवं खण्डितधीर् विवेद ॥९६ ॥

विषादाद् यथा श्रीदशमे 10.11.49 _
कृष्णं महाबकग्रस्तं दृष्ट्वा रामादयो ऽर्भकाः।
बभूवुर् इन्द्रियाणीव विना प्राणं विचेतसः ॥९७ ॥

अस्यान्यत्रात्मपर्यन्ते स्यात् सर्वत्रैव मूढता।
कृष्णस्फूर्तिविशेषस् तु न कदाप्य् अत्र लीयते ॥९८ ॥

अथ 15 मृतिः _
विषादव्याधिसन्त्राससम्प्रहारक्लमादिभिः।
प्राणत्यागो मृतिस् तस्याम् अव्यक्ताक्षरभाषणम्।
विवर्णगात्रताश्वासमान्द्यहिक्कादयः क्रियाः ॥९९ ॥

यथा _
अनुल्लासश्वासा मुहुर् असरलोत्तानितदृशो
विवृण्वन्तः काये किम् अपि नववैवर्ण्यम् अभितः।
हरेर् नामाव्यक्तीकृतम् अलघुहिक्कालहरीभिः
प्रजल्पन्तः प्राणान् जहति मथुरायां सुकृतिनः ॥१०० ॥

यथा वा _

विरमदलघुकण्ठोद्घोषघुत्कारचक्रा
क्षणविघटिततातम्यद्दृष्टिखद्योतदीप्तिः ।
हरिमिहिरनिपीतप्राणगाढान्धकारा
क्षयम् अगमद् अकस्मात् पूतना कालरात्रिः ॥१०१॥

प्रायोऽत्र मरणात् पूर्वा चित्तवृत्तिर् मृतिर् मता ।
मृतिर् अत्रानुभावः स्याद् इति केनचिद् उच्यते ।
किन्तु नायकवीर्य्ये आर्थं शत्रौ मरणम् उच्यते ॥१०२॥

अथ 16 आलस्यम् _
सामर्थ्यस्यापि सद्भावे क्रियानुन्मुखता हि या ।
तृप्तिश्रमादिसम्भूता तदालस्यम् उदीर्यते ॥१०३॥
अत्राङ्गभजो जृम्भा च क्रिया द्वेषोऽक्षिमर्दनम् ।
शय्यासनैकप्रियता तन्द्रानिद्रादयोऽपि च ॥१०४॥

तत्र तृप्ते्ये यथा _
विप्राणां नस् तथा तृप्तिर् आसीद् गोवर्धनोत्सवे ।
नाशीर्वादेऽपि गोपेन्द्र यथा स्यात् प्रभविष्णुता ॥१०५॥

श्रमाद् यथा _
सुष्ठु निःसहतनुः सुबलोऽभूत्
प्रीतये मम विधाय नियुद्धम् ।
मोटयन्तम् अभितो निजम् अङ्गं
नाहवाय सहसाह्वयताम् अमुम् ॥१०६॥

अथ 17 जाड्यम् _
जाड्यम् अप्रतिपत्तिः स्याद् इष्टानिष्टश्रुतीक्षणैः ।
विरहाद्यैश् च तन्मोहात् पूर्वावस्थापरापि च ।
अत्रानिमिषता तूष्णीम्भावविस्मरणादयः ॥१०७॥

तत्र इष्टश्रुत्या यथा श्रीदशमे 10.21.13 _
गावश् च कृष्णमुखनिर्गतवेणुगीत
पीयूषम् उत्तभितकर्णपुटैः पिबन्त्यः ।
शावाः स्नुतस्तनपयःकवलाः स्म तस्थुर्
गोविन्दम् आत्मनि दृशाश्रुकुलाः स्पृशन्त्यः ॥१०८॥

अनिष्टश्रुत्या यथा _
आकलय्य परिवर्तितगोत्रां
केशवस्य गिरम् अर्पितशल्याम् ।
बिद्धधीर् अधिकनिर्निमिषाक्षी
लक्षणा क्षणम् अवर्तत तूष्णीम् ॥१०९॥

इष्टेक्षणेन यथा श्रीदशमे 10.71.40 _
गोविन्दं गृहम् आनीय देवदेवेशम् आदृतः ।
पूजायां नाविदत् कृत्यं प्रमादोपहतो नृपः ॥११०॥

अनिष्टेक्षणेन यथा तत्रैव 10.39.36
यावद् आलक्ष्यते केतुर् यावद् रेणू रथस्य च ।
अनुप्रस्थापितात्मानो लेख्यानीवोपलक्षिताः ॥१११॥

विरहेण यथा _
मुकुन्द विरहेण ते विधुरिताः सखायश् चिराद्
अलङ्कृतिभिर् उज्झिता भुवि निविश्य तत्र स्थिताः ।
स्खलन्मलिनवाससः शवलरुक्षगात्रश्रियः
स्फुरन्ति खलदेवलद्विजगृहे सुरार्चा इव ॥११२॥

अथ 18 व्रीडा _
नवीनसङ्गमाकार्यस् तवावज्ञादिना कृता ।
अधृष्टता भवेद् व्रीडा तत्र मौनं विचिन्तनम् ।
अवगुण्ठनभूलेखौ तथाधोमुखतादयः ॥११३॥

तत्र नवीनसङ्गमेन यथा पद्यावल्याम् 198
गोविन्दे स्वयम् अकरोः सरोजनेत्रे
प्रेमान्धा वरवपुर् अर्पणं सखि ।
कार्पण्यं न कुरु दरावलोकदाने
विक्रीते करिणि किम् अङ्कुशे विवादः ॥११४॥

अकार्येण यथा _
त्वम् अवाग् इह मा शिरः कृथा
वदनं च त्रपया शचीपते ।
नय कल्पतरुं न चेच् छचीं
कथम् अग्रे मुखम् ईक्षयिष्यसि ॥११५॥

स्तवेन यथा _
भूरिसाद्गुण्यभारेण स्तूयमानस्य शौरिणा ।
उद्धवस्य व्यरोचिष्ट नम्रीभूतं तदा शिरः ॥११६॥

अवज्ञया यथा हरिवंशे 2.67.1911 सत्यादेवीवाक्यम् _
वसन्तकुसुमैश् चित्रं सदा रैवतकं गिरिम् ।
प्रिया भूत्वाऽप्रिया भूता कथं द्रक्ष्यामि तं पुनः ॥११७॥

अथ 19 अवहित्था _
अवहित्थाकारगुप्तिर् भवेद् भावेन केनचित् ॥११८ ॥
अत्राङ्गादेः पराभ्यूहस्थानस्य परिगूहनम् ।
अन्यत्रेक्षा वृथाचेष्टा वाग्भङ्गीत्यादयः क्रियाः ॥११९ ॥

तथा चोक्तम् _
अनुभावपिधानार्थोऽवहित्थं भाव उच्यते ॥१२० ॥

तत्र जैह्म्येन यथा श्रीदशमे 10.32.15 _
सभाजयित्वा तम् अनङ्गदीपनं
सहासलीलेक्षणविभ्रमभ्रुवा ।
संस्पर्शनेनाङ्ककृताङ्घ्रिहस्तयोः
संस्तुत्य ईषत् कुपिता बभाषिरे ॥१२१ ॥

दाक्षिण्येन यथा _
सात्राजितीसदनसीमनि पारिजाते
नीते प्रणीतमहसा मधुसूदनेन ।
द्राघीयसीमनि विदर्भभुवस् तदेर्ष्यां
सौशील्यतः किल न कोऽपि विदाम्बभूव ॥१२२ ॥

ह्रिया यथा प्रथमे 1.11.33 _
तम् आत्मजैर् दृष्टिभिर् अन्तरात्मना
दुरन्तभावाः परिरेभिरे पतिम् ।
निरुद्धम् अप्य् आस्रवद् अम्बु नेत्रयोर्
विलज्जतीनां भृगुवर्य वैक्लवात् ॥१२३ ॥

जैह्म्यह्रीभ्यां यथा _
का वृषस्यति तं गोष्ठभुजङ्गं कुलपालिका ।
दूति यत्र स्मृते मूर्तिर् भीत्या रोमाञ्चिता मम ॥१२४ ॥

सौजन्येन यथा _
गूढा गाभीर्यसम्पद्भिर् मनोगह्वरगर्भगा ।
प्रौढाप्य् अस्या रतिः कृष्णे दुर्वितर्का परैर् अभूत् ॥१२५ ॥

गौरवेण यथा _
गोविन्दे सुबलमुखैः समं सुहृद्भिः
स्मेरास्यैः स्फुटम् इह नर्म निर्मिमाणे ।
आनम्रीकृतवदनः प्रमोदमुग्धो
यत्नेन स्मितम् अथ संववार पत्री ॥१२६ ॥

हेतुः कश्चिद् भवेत् कश्चिद् गोप्यः कश्चन गोपनः ।
इति भावत्रयस्यात्र विनियोगः समीक्ष्यते ॥१२७ ॥
हेतुत्वं गोपनत्वं च गोप्यत्वं चात्र सम्भवेत् ।
प्रायेण सर्वभावानाम् एकशोऽनेकशोऽपि च ॥१२८ ॥

अथ 20 स्मृतिः _
या स्यात् पूर्वानुभूतार्थप्रतीतिः सदृशेक्षया ।
दृढाभ्यासादिना वापि सा स्मृतिः परिकीर्तिता ।
भवेद् अत्र शिरःकम्पो भ्रूविक्षेपादयोऽपि च ॥१२९ ॥

तत्र सदृशेक्षणा यथा _
विलोक्य श्यामम् अम्भोदम् अम्भोरुहविलोचना ।
स्मारं स्मारं मुकुन्द त्वां स्मारं विक्रमम् अन्वभूत् ॥१३० ॥

दृढाभ्यासेन यथा _
प्रणिधानविधिम् इदानीम् अकुर्वतोऽपि प्रमादतो हृदि मे ।
हरिपदपङ्कजयुगलं क्वचित् कदाचित् परिस्फुरति ॥१३१ ॥

अथ 21 वितर्कः _
विमर्षात् संशयादेश् च वितर्कस् तूह उच्यते ।
एष भ्रूक्सेपणशिरोऽङ्गुलिसञ्चालनादिकृत् ॥१३२ ॥

तत्र विमर्षाद् यथा विदग्धमाधवे 2.27 _
न जानीषे मूर्ध्नश् च्युतम् अपि शिखण्डं यद् अखिलं
न कण्ठे यन् माल्यं कलयसि पुरस्तात् कृतम् अपि ।
तद् उन्नीतं वृन्दावनकुहरलीलाकलभ हे
स्फुटं राधानेत्रभ्रमरवर वीर्योन्नतिर् इयम् ॥१३३ ॥

संशयात् यथा _
असौ किं तापिञ्छो न हि तदमलश्रीर् इह गतिः
पयोदः किं वामं न यद् इह निरङ्गो हिमकरः ।
जगन्मोहारम्भोद्धुरमधुरवंशीध्वनिर् इतो
ध्रुवं मूर्धन्य् अद्रेर् विधुमुखि मुकुन्दो विहरति ॥१३४ ॥

विनिर्णयान्त एवायं तर्क इत्य् ऊचिरे परे ॥१३५ ॥

अथ 22 चिन्ता _
ध्यानं चिन्ता भवेद् इष्टानाप्त्यनिष्टाप्तिनिर्मितम् ।
श्वासाधोमुखभूलेखवैवर्ण्यान् निद्रता इह ।

विलापोत्तापकृशताबाष्पदैन्यादयोऽपि च ॥१३६ ॥

तत्र इष्टानाप्त्या यथा श्रीदशमे 10.29.29
कृत्वा मुखान्य् अवशुचः श्वसनेन शुष्यद्
बिम्बाधराणि चरणेन लिखन्त्यः ।
अस्रैर् उपात्तमसिभिः कुचकुङ्कुमानि
तस्थुर् मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥१३७ ॥

यथा वा _
अरतिभिर् अतिक्रम्य क्षामा प्रदोषम् अदोषधीः
कथम् अपि चिराद् अध्यासीना प्रघाणम् अघान्तक ।
विधूरितमुखी घूर्णत्य् अन्तः प्रसूस् तव चिन्तया
किम् अहह गृहं क्रीडालुब्ध त्वयाद्य विसस्मरे ॥१३८ ॥

अनिष्टाप्त्या यथा _
गृहिणि गहनयान्तश्चिन्तयोन्निद्रनेत्रा
ग्लपय न मुखपद्मं तप्तबाष्पप्लवेन ।
नृपपुरम् अनुविन्दन् गान्दिनेयेन सार्धं
तव सुतम् अहम् एव द्राक् परावर्तयामि ॥१३९ ॥

अथ 23 मतिः _
शास्त्रादीनां विचारोत्थम् अर्थनिर्धारणं मतिः ॥१४० ॥
अत्र कर्तव्यकरणं संशयभ्रमयोश् छिदा ।
उपदेशश् च शिष्याणाम् ऊहापोहादयोऽपि च ॥१४१ ॥

यथा पाद्मे वैशाखमाहात्म्ये _
व्यामोहाय चराचरस्य जगतस् ते ते पुराणागमास्
तां ताम् एव हि देवतां परमिकां जल्पन्तु कल्पावधि ।
सिद्धान्ते पुनर् एक एव भगवान् विष्णुः समस्तागम
व्यापारेषु विवेचनव्यतिकरं नीतेषु निश्चीयते ॥१४२ ॥

यथा वा श्रीदशमे 10.60.39 _
त्वं न्यस्तदण्डमुनिभिर् गदितानुभाव
आत्मात्मदश् च जगताम् इति मे वृतोऽसि ।
हित्वा भवद्भ्रुव उदीरितकालवेग
ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्ये ॥१४३ ॥

अथ 24 धृतिः _
धृतिः स्यात् पूर्णता ज्ञानदुःखाभावोत्तमाप्तिभिः ।
अप्राप्तातीतनष्टार्थान् अभिसंशोचनादिकृत् ॥१४४ ॥

तत्र ज्ञानेन यथा वैराग्यशतके 55 भर्तृहरिः _
अश्नीमहि वयं भिक्षाम् आशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किम् ईश्वरैः ॥१४५ ॥

दुःखाभावेन यथा _
गोष्ठं रमाकेलिगृहं चकास्ति
गावश् च धावन्ति परःपरार्धाः ।
पुत्रस् तथा दीव्यति दिव्यकर्मा
तृप्तिर् ममाभूद् गृहमेधिसौख्ये ॥१४६ ॥

उत्तमाप्त्या यथा _
हरिलीलासुधासिन्धोस् तटम् अप्य् अधितिष्ठतः ।
मनो मम चतुर्वर्गं तृणायापि न मन्यते ॥१४७ ॥

अथ 25 हर्षः _
अभीष्टेक्षणलाभादिजाता चेतःप्रसन्नता ।
हर्षः स्याद् इह रोमाञ्चः स्वेदोऽश्रु मुखफुल्लता ।
आवेगोन्मादजडतास् तथा मोहादयोऽपि च ॥१४८ ॥

तत्र अभीष्टेक्षणेन यथा श्रीविष्णुपुराणे इ ५।१७।२५
तौ दृष्ट्वा विकसद्वक्त्रसरोजः स महामतिः ।
पुलकाञ्चितसर्वाङ्गस् तदाक्रूरोऽभवन् मुने ॥१४९ ॥

अभीष्टलाभेन यथा श्रीदशमे 10.33.12
तत्रैकांसगतं बाहुं कृष्णस्योत्पलसौरभम् ।
चन्दनालिप्तम् आघ्राय हृष्टरोमा चुचुम्ब ह ॥१५० ॥

अथ 26 औत्सुक्यम् _
कालाक्षमत्वम् औत्सुक्यम् इष्टेक्षाप्तिस्पृहादिभिः ।
मुखशोषत्वराचिन्तानिःश्वासस्थिरतादिकृत् ॥१५१ ॥

तत्र इष्टेक्षास्पृहया यथा श्रीदशमे 10.71.34
प्राप्तं निशम्य नरलोचनपानपात्रम्
औत्सुक्यविश्लथितकेशदुकूलबद्धाः ।
सद्यो विसृज्य गृहकर्म पतींश् च तल्पे
द्रष्टुं ययुर् युवतयः स्म नरेन्द्रमार्गे ॥१५२ ॥

यथा वा स्तवावल्यां श्रीराधिकाष्टके 14.7 _
प्रकटितनिजवासं स्निग्धवेणुप्रणादैर्

द्रुतगति हरिम् आरात् प्राप्य कुञ्जे स्मिताक्षी ।
श्रवणकुहरकण्डुं तन्वती नम्रवक्त्रा
स्नपयति निजदास्ये राधिका मां कदा नु ॥१५३ ॥

इष्टाप्तिस्पृहया यथा _
नर्मकर्मठतया सखीगणे
द्राघयत्य् अघहराग्रतः कथाम् ।
गुच्छकग्रहणकैतवाद् असौ
गह्वरं द्रुतपदक्रमं ययौ ॥१५४ ॥

अथ 28 औग्र्यम् _
अपराधदुरुक्त्यादि जातं चण्डत्वम् उग्रता ।
वधबन्धशिरःकम्पभर्त्सनोत्ताडनादिकृत् ॥१५५ ॥

तत्र अपराधाद् यथा _
स्फुरति मयि भुजङ्गीगर्भविश्रंसिकीर्तौ
विरचयति मदीशे किल्बिषं कालियोऽपि ।
हुतभुजि बत कुर्यां जाठरे वौषड् एनं
सपदि दनुजहन्तुः किन्तु रोषाद् बिभेमि ॥१५६ ॥

दुरुक्तितो यथा सहदेवोक्तिः _
प्रभवति विबुधानाम् अग्रिमस्याग्रपूजां
न हि दनुजरिपोर् यः प्रौङ्धकीर्तेर् विसोढुम् ।
कटुतरयमदण्डोद्दण्डरोचिर् मयासौ
शिरसि पृथुनि तस्य न्यस्यते सव्यपादः ॥१५७ ॥

यथा वा बलदेवोक्तिः _
रताः किल नृपासने क्षितिपलक्षभुक्तोज्झिते
खलाः कुरुकुलाधमाः प्रभुम् अजाण्डकोटिष्व् अमी ।
हहा बत विडम्बना शिव शिवाद्य नः शृण्वतां
हठाद् इह कटाक्षयन्त्य् अखिलवन्द्यम् अप्य् अच्युतम् ॥१५८ ॥

अथ 28 अमर्षः _
अधिक्षेपापमानादेः स्याद् अमर्षोऽसहिष्णुता ॥१५९ ॥
तत्र स्वेदः शिरःकम्पो विवर्णत्वं विचिन्तनम् ।
उपायान्वेषणाक्रोशवैमुख्योत्ताडनादयः ॥१६० ॥

तत्र अधिक्षेपाद् यथा विदग्धमाधवे 2.53 _
निर्धौतानाम् अखिलधरणीमाधुरीणा
कल्याणी मे निवसति वधूः पश्य पार्श्वे नवोढा ।
अन्तर्गोष्ठे चटुल नटयन्न् अत्र नेत्रत्रिभागं
निःशङ्कस् त्वं भ्रमसि भविता नाकुलत्वं कुतो मे ॥१६१ ॥

अपमानाद् यथा पद्मोक्तिः _
कदम्बवनतस्कर द्रुतम् अपेहि किं चाटुभिर्
जने भवति मद्विधे परिभवो हि नातः परः ।
त्वया व्रजमृगीदृशां सदसि हन्त चन्द्रावली
वरापि यद् अयोग्यया स्फुटम् अदूषि तारख्यया ॥१६२ ॥

आदिशब्दाद् वञ्चनाद् अपि यथा श्रीदशमे 10.31.16 _
पतिसुतान्वयभ्रातृबान्धवान्
अतिविलङ्घ्य ते ऽन्त्य् अच्युतागताः ।
गतिविदस् तवोद्गीतमोहिताः
कितव योषितः कस् त्यजेन् निशि ॥१६३ ॥

अथ 29 असूया _
द्वेषः परोदयेऽसूयान्यसौभाग्यगुणादिभिः ।
तत्रेर्ष्यानादराक्षेपा दोषारोपो गुणेष्व् अपि ।
अपवृत्तिस् तिरोवीक्षा भ्रुवोर् भङ्गुरतादयः ॥१६४ ॥

तत्र अन्यसौभाग्येन यथा पद्यावल्याम् 302१२ _
मा गर्वम् उद्वह कपोलतले चकास्ति
कृष्णस्वहस्तलिखिता नवमञ्जरीति ।
अन्यापि किं न सखि भाजनम् ईदृशीनां
वैरी न चेद् भवति वेपथुर् अन्तरायः ॥१६५ ॥

यथा वा श्रीदशमे 10.30.30 _
तस्या अमूनि नः क्षोभं कुर्वन्त्य् उच्चैः पदानि यत् ।
यैकापहृत्य गोपीनां रहो भुङ्क्ते ऽच्युताधरम् ॥१६६ ॥

गुणेन यथा _
स्वयं पराजयं प्राप्तान् कृष्णपक्षान् विजित्य नः ।
बलिष्ठा बलपक्षाश् चेद् दुर्बलाः के ततः क्षितौ ॥१६७ ॥

अथ 30 चापल्यम् _
रागद्वेषादिभिश् चित्तलाघवं चापलं भवेत् ।
तत्राविचारपारुष्यस्वच्छन्दाचरणादयः ॥१६८ ॥

तत्र रागेण यथा श्रीदशमे 10.52.41 _
श्वो भाविनि त्वम् अजितोद्वहने विदर्भान्

गुप्तः समेत्य पृतनापतिभिः परीतः।
निर्मथ्य चैद्यमगधेशबलं प्रसह्य
मां राक्षसेन विधिनोद्वह वीर्यशुल्काम् ॥१६९॥

द्वेषेण यथा _
वंशीपूरेण कालिन्द्याः सिन्धुं विन्दतु वाहिता।
गुरोर् अपि पुरो नीवीं या भ्रंशयति सुभ्रुवाम् ॥१७०॥

अथ 31 निद्रा _
चिन्तालस्यनिसर्गक्लमादिभिश् चित्तमीलनं निद्रा।
तत्राङ्गभङ्गजृम्भाजाड्यश्वासाक्षिमीलनानि स्युः ॥१७१॥

तत्र चिन्तया यथा _
लोहितायति मार्तण्डे वेणुध्वनिम् अशृण्वती।
चिन्तयाक्रान्तहृदया निदद्रौ नन्दगेहिनी ॥१७२॥

आलस्येन यथा _
दामोदरस्य बन्धनकर्मभिर् अतिनिःसहाङ्गलतिकेयम्।
दरविघूर्णितोत्तमाङ्गा कृताङ्गभङ्गा व्रजेश्वरी स्फुरति ॥१७३॥

निसर्गेण यथा _
अघहर तव वीर्यप्रोषिताशेषचिन्ताः
परिहृतगृहवास्तुद्वारबन्धानुबद्धाः।
निजनिजम् इह रात्रौ प्राङ्गनं शोभयन्तः
सुखम् अविचलदङ्गाः शेरते पश्य गोपाः ॥१७४॥

क्लमेन यथा _
सङ्क्रान्तधातुचित्रा सुरतान्ते सा नितान्ततान्ताऽद्य।
वक्षसि निक्षिप्ताङ्गी हरेर् विशाखा ययौ निद्राम् ॥१७५॥

युक्तास्य स्फूर्तिमात्रेण निर्विशेषेण केनचित्।
हृन्मीलनात् पुरोऽवस्था निद्रा भक्तेषु कथ्यते ॥१७६॥

अथ 32 सुप्तिः _
स्वुप्तिर् निद्राविभावा स्यान् नानार्थानुभवात्मिका।
इन्द्रियोपरतिश्वासनेत्रसंमीलनादिकृत् ॥१७७॥

यथा _
कामं तामरसाक्ष केलिविततिः प्रादुष्कृता शैशवी
दर्पः सर्पपतेस् तद् अस्य तरसा निर्धूयताम् उद्धूरः।
इत्य् उत्स्वप्नगिरा चिराद् यदुसभां विस्मापयन् स्मेरयन्
निःश्वासेन दरोत्तरङ्गदुदरं निद्रां गतो लाङ्गली ॥१७८॥

अथ 33 बोधः _
अविद्यामोहनिद्रादेर् ध्वंसोद्बोधः प्रबुद्धता ॥१७९॥

तत्र अविद्याध्वंसतः _
अविद्याध्वंसतो बोधो विद्योदयपुरःसरः।
अशेषक्लेशविश्रान्तिस्वरूपावगमादिकृत् ॥१८०॥

यथा _
विन्दन् विद्यादीपिकां स्वस्वरूपं
बुद्ध्वा सद्यः सत्यविज्ञानरूपम्।
निष्प्रत्यूहस् तत् परं ब्रह्म मूर्तं
सान्द्रानन्दाकारम् अन्वेषयामि ॥१८१॥

मोहध्वंसतः _
बोधो मोहक्षयाच् छब्दगन्धस्पर्शरसैर् हरेः।
दृगुन्मीलनरोमाञ्चधरोत्थानादिकृद् भवेत् ॥१८२॥

तत्र शब्देन यथा _
प्रथमदर्शनरूढसुखावली
कवलितेन्द्रियवृत्तिर् अभूद् इयम्।
अघभिदः किल नाम्न्य् उदिते श्रुतौ
ललितयोदमिमीलद् इहाक्षिणी ॥१८३॥

गन्धेन यथा _
अचिरम् अघहरेण त्यागतः स्रस्तगात्री
वनभुवि शवलाङ्गी शान्तनिःश्वासवृत्तिः।
प्रसरति वनमाला सौरभे पश्य राधा
पुलकिततनुर् एषा पांशुपुञ्जाद् उदस्थात् ॥१८४॥

स्पर्शेन यथा _
असौ पाणिस्पर्शो मधुरमसृणः कस्य विजयी
विशीर्यन्त्याः सौरपुलिनवनम् आलोक्य मम यः।
दुरन्ताम् उद्धूय प्रसभम् अभितो वैशसमयीं
द्रुतं मूर्च्छाम् अन्तः सखि सुखमयीं पल्लवयति ॥१८५॥

रसेन यथा _
अन्तर्हिते त्वयि बलानुज रासकेलौ

स्रस्ताङ्गयष्टिर् अजनिष्ट सखी विसंज्ञा।
ताम्बूलचर्वितम् अवाप्य तवाम्बुजाक्षी
न्यस्तं मया मुखपुटे पुलकोज्ज्वलासीत् ॥१८६ ॥

निद्राध्वंसतः _
बोधो निद्राक्षयात् स्वप्ननिद्रापूर्तिस्वनादिभिः।
तत्राक्षिमर्दनं शय्यामोक्षोऽङ्गवलनादयः ॥१८७ ॥

तत्र स्वप्नेन यथा _
इयं ते हासश्रीर् विरमतु विमुञ्चाञ्चलम् इदं
न यावद्वृद्धायै स्फुटम् अभिदधे त्वच्चटुलताम्।
इति स्वप्ने जल्पन्त्य् अचिरम् अवबुद्धा गुरुम् असौ
पुरो दृष्ट्वा गौरी नमितमुखबिम्बा मुहुर् अभूत् ॥१८८ ॥

निद्रापूर्त्या यथा _
दूती चागात् तदागारं जजागार च राधिका।
तूर्णं पुण्यवतीनां हि तनोति फलम् उद्यमः ॥१८९ ॥

स्वनेन यथा _
दूराद् विद्रावयन् निद्रामरालीर् गोपसुभ्रुवाम्।
सारङ्गरङ्गदं रेजे वेणुवारिदगर्जितम् ॥१९० ॥

इति भावास् त्रयस्त्रिंशत् कथिता व्यभिचारिणः।
श्रेष्ठमध्यकनिष्ठेषु वर्णनीया यथोचितम् ॥१९१ ॥
मात्सर्योद्वेगदम्भेर्ष्या विवेको निर्णयस् तथा।
क्लैब्यं क्षमा च कुतुकम् उत्कण्ठा विनयोऽपि च ॥१९२ ॥
संशयो धाष्टर्यम् इत्य् आद्या भावा ये स्युः परेऽपि च।
उक्तेष्व् अन्तर्भवन्तीति न पृथक्त्वेन दर्शिताः ॥१९३ ॥

तथा हि _
असूयायां तु मात्सर्यं त्रासेऽप्य् उद्वेग एव तु।
दम्भस् तथावहित्थायाम् ईर्ष्यामर्षे मताव् उभौ।
विवेको निर्णयश् चेमौ दैन्ये क्लैब्यं क्षमा धृतौ ॥१९४ ॥
औत्सुक्ये कुतुकोत्कण्ठे लज्जायां विनयस् तथा।
संशयोऽन्तर्भवेत् तर्के तथा धाष्टर्यं च चापले ॥१९५ ॥
एषां सञ्चारिभावानां मध्ये कश्चन कस्यचित्।
विभावश् चानुभावश् च भवेद् एव परस्परम् ॥१९६ ॥
निर्वेदे तु यथेर्ष्याया भवेद् अत्र विभावता।
असूयायां पुनस् तस्या व्यक्तम् उक्तानुभावता ॥१९७ ॥
औत्सुक्यं प्रति चिन्तायाः कथितात्रानुभावता।
निद्रां प्रति विभावत्वम् एवं ज्ञेयः परेऽप्य् अमी ॥१९८ ॥
एषां च सात्त्विकानां च तथा नानाक्रियाततेः।
कार्यकारणभावस् तु ज्ञेयः प्रायेण लोकतः ॥१९९ ॥
निन्दायास् तु विभावत्वं वैवर्ण्यामर्षयोर् मतम्।
असूयायां पुनस् तस्याः कथितैवानुभावता ॥२०० ॥
प्रहारस्य विभावत्वं संमोहप्रलयौ प्रति।
औग्र्यं प्रत्यनुभावत्वम् एवं ज्ञेयाः परेऽपि च ॥२०१ ॥
त्रासनिद्राश्रमालस्यमदभिद्बोधवर्जिनाम्।
सञ्चारिणाम् इह क्वापि भवेद् रत्यनुभावता ॥२०२ ॥
साक्षाद्रतेर् न सम्बन्धः षड्भिस् त्रासादिभिः सह।
स्यात् परस्परया किन्तु लीलानुगुणताकृते ॥२०३ ॥
वितर्कमतिनिर्वेदधृतीनां स्मृतिहर्षयोः।
बोधभिद्दैन्यसुप्तीनां क्वचिद् रतिविभावता ॥२०४ ॥
परतन्त्राः स्वतन्त्राश् चेत्य् उक्ताः सञ्चारिणो द्विधा ॥२०५ ॥

तत्र परतन्त्राः _
वरावरतया प्रोक्ताः परतन्त्रा अपि द्विधा ॥२०६ ॥

तत्र वरः _
साक्षाद् व्यवहितश् चेति वरोऽप्य् एष द्विधोदितः ॥२०७ ॥

तत्र साक्षात् _
मुख्याम् एव रतिं पुष्णन् साक्षाद् इत्य् अभिधीयते ॥२०८ ॥

यथा _
तनुरुहाली च तनुश् च नृत्यं
तनोति मे नाम निशम्य यस्य।
अपश्यतो माथुरमण्डलं तद्
व्यर्थेन किं हन्त दृशोर् द्वयेन ॥२०९ ॥

अथ व्यवहितः _
पुष्णाति यो रतिं गौणीं स व्यवहितो मतः ॥२१० ॥

यथा _
धिग् अस्तु मे भुजद्वन्द्वं भीमस्य परिघोपमम्।
माधवाक्षेपिणं दुष्टं यत् पिनष्टि न चेदिपम् ॥२११ ॥

निर्वेदः क्रोधवश्यत्वाद् अयं व्यवहितो रतेः ॥२१२ ॥

अथ अवरः _

रसद्वयस्याप्य् अङ्गत्वम् अगच्छन्न् अवरो मतः ॥२१३ ॥

यथा _
लेलिह्यमानं वदनैर् ज्वलद्भिर्
जगन्ति दंष्ट्रास्फुटदुत्तमाङ्गैः ।
अवेक्ष्य कृष्णं धृतविश्वरूपं
न स्वं विशुष्यन् स्मरति स्म जिष्णुः ॥२१४ ॥

घोरक्रियाद्यनुभावाद् आच्छाद्य सहजां रतिम् ।
दुर्वराविरभूद् भीतिर् मोहोऽयं भीवशस् ततः ॥२१५ ॥

अथ स्वतन्त्राः _
सदैव पारतन्त्र्येऽपि क्वचिद् एषां स्वतन्त्रता ।
भूपालसेवकस्येव प्रवृत्तस्य करग्रहे ॥२१६ ॥
भावज्ञै रतिशून्यश् च रत्यनुस्पर्शनस् तथा ।
रतिगन्धिश् च ते त्रेधा स्वतन्त्राः परिकीर्तिताः ॥२१७ ॥

तत्र रतिशून्यः _
जनेषु रतिशून्येषु रतिशून्यो भवेद् असौ ॥२१८ ॥

यथा श्रीदशमे 10.23.39 _
धिग् जन्म नस् त्रिवृद्विद्यां धिग् व्रतं धिग् बहुज्ञताम् ।
धिक् कुलं धिक् क्रियादीक्षां विमुखा ये त्व् अधोक्षजे ॥२१९ ॥
अत्र स्वतन्त्रो निर्वेदः ।

तत्र रत्यनुस्पर्शनः _
यः स्वतो रतिगन्धेन विहीनोऽपि प्रसङ्गतः ।
पश्चाद् रतिं स्पृशेद् एष रत्यनुस्पर्शनो मतः ॥२२० ॥

यथा _
गरिष्ठारिष्टटङ्कारैर् विधुरा वधिरायिता ।
हा कृष्ण पाहि पाहीति चुक्रोशाभीरबालिका ॥२२१ ॥
अत्र त्रासः ।

अथ रतिगन्धिः _
यः स्वातन्त्र्येऽपि तद्गन्धं रतिगन्धिर् व्यनक्ति सः ॥२२२ ॥

यथा _
पीतांशुकं परिचिनोमि धृतं त्वयाङ्गे
सङ्गोपनाय न हि नप्त्रि विधेहि यत्नम् ।
इत्य् आर्यया निगदिता नमितोत्तमाङ्गा
राधावगुण्ठितमुखी तरसा तदासीत् ॥२२३ ॥
अत्र लज्जा ।

आभासः पुनर् एतेषाम् अस्थाने वृत्तितो भवेत् ।
प्रातिकूल्यम् अनौचित्यम् अस्थानत्वं द्विधोदितम् ॥२२४ ॥

तत्र प्रातिकूल्यम् _
विपक्षे वृत्तिर् एतेषां प्रातिकूल्यम् इतीर्यते ॥२२५ ॥

यथा _
गोपोऽप्य् अशिक्षितरणोऽपि तम् अश्वदैत्यं
हन्ति मे हन्त मम जीवितनिर्विशेषम् ।
क्रीडाविनिर्जितसुराधिपतेर् अलं मे
दुर्जीवितेन हतकंसनराधिपस्य ॥२२६ ॥
अत्र निर्वेदस्याभासः ।

यथा वा _
डुण्डभो जलचरः स कालियो
गोष्ठभूभृद् अपि लोष्ट्रसोदरः ।
तत्र कर्म किम् इवाद्भुतं जने
येन मूर्ख जगदीशतेर्यते ॥२२७ ॥
अत्रासूयायाः ।

अथ अनौचित्यम् _
असत्यत्वम् अयोग्यत्वम् अनौचित्यं द्विधा भवेत् ।
अप्राणिनि भवेद् आद्यः तिर्यगादिषु चान्तिमम् ॥२२८ ॥

तत्र अप्राणिनि यथा _
छाया न यस्य सकृद् अप्य् उपसेविताभूत्
कृष्णेन हन्त मम तस्य धिग् अस्तु जन्म ।
मा त्वं कदम्ब विधुरो भव कालियाहिं
मृद्नन् करिष्यति हरिश् चरितार्थतां ते ॥२२९ ॥
अत्र निर्वेदस्य ।

तिरश्चि यथा _
अधिरोहतु कः पक्षी कक्षाम् अपरो ममाद्य मेध्यस्य ।
हित्वापि तार्क्ष्यपक्षं भजते पक्षं हरिर् यस्य ॥२३० ॥
अत्र गर्वस्य ।

वहमानेष्व् अपि सदा ज्ञानविज्ञानमाधुरीम्।
कदम्बादिषु सामान्यदृष्ट्याभासत्वम् उच्यते ॥२३१॥
भावानां क्वचिद् उत्पत्तिसन्धिशावल्यशान्तयः।
दशाश् चतस्र एतासाम् उत्पत्तिस् त्व् इह सम्भवः ॥२३२॥

यथा _
मण्डले किम् अपि चण्डमरीचेर्
लोहितायति निशम्य यशोदा।
वैणवीं ध्वनिधुराम् अविदूरे
प्रस्रवस्तिमितकञ्चुलिकासीत् ॥२३३॥
अत्र हर्षोत्पत्तिः।

यथा वा __
त्वयि रहसि मिलन्त्यां सम्भ्रमन्यासभुग्नाप्य्
उषसि सखि तवाली मेखला पश्य भाति।
इति विवृतरहस्ये कुञ्चितभ्रूर्
दृशम् अनृजु किरन्ती राधिका वः पुनातु ॥२३४॥
अत्रासूयोत्पत्तिः।

अथ सन्धिः _
सरूपयोर् भिन्नयोर् वा सन्धिः स्याद् भावयोर् मूर्तिः ॥२३५॥

तत्र सरूपयोः सन्धिः _
सन्धिः सरूपयोस् तत्र भिन्नहेतूत्थयोर् मतः ॥२३६॥

यथा _
राक्षसीं निशि निशाम्य निशान्ते
गोकुलेशगृहिणी पतिताङ्गीम्।
तत्कुचोपरि सुतं च हसन्तं
हन्त निश्चलतनुः क्षणम् आसीत् ॥२३७॥
अत्रानिष्टेष्टसंवीक्षाकृतयोर् जाड्ययोर् युतिः।

अथ भिन्नयोः _
भिन्नयोर् हेतुनैकेन भिन्नेनाप्य् उपजातयोः ॥२३८॥

अथ एकहेतुजयोः यथा _
दुर्वारश्चापलोऽयं धावन्न् अन्तर् बहिश् च गोष्ठस्य।
शिशुर् अकुतश्चिद् भीतिर् धिनोति हृदयं दुनोति च मे ॥२३९॥
तत्र हर्षशङ्कयोः।

तत्र भिन्नहेतुजयोः यथा _
विलसन्तम् अवेक्ष्य देवकी
सुतम् उत्फुल्लविलोचनं पुरः।
प्रबलाम् अपि मल्लमण्डलीं
हिमम् उष्णं च जलं दृशोर् दधे ॥२४०॥
अत्र हर्षविषादयोः सन्धिः।

एकेन जायमानानाम् अनेकेन च हेतुना।
बहूनाम् अपि भावानां सन्धिः स्फुटम् अवेक्ष्यते ॥२४१॥

तत्र एकहेतुजानां यथा _
निरुद्धा कालिन्दीतटभुवि मुकुन्देन बलिना
हठाद् अन्तःस्मेरां तरलतरतारोज्ज्वलकलाम्।
अभिव्यक्तावज्ञाम् अरुणकुटिलापाङ्गसुषमां
दृशं न्यस्यन्त्य् अस्मिन् जयति वृषभानोः कुलमणिः ॥२४२॥
अत्र हर्षौत्सुक्यगर्वामर्षासूयानां सन्धिः।

अनेकहेतुजानां यथा _
परिहितहरिहारा वीक्ष्य राधा सवित्रीं
निकटभुवि तथाग्रे तर्कभाक् स्मेरपद्माम्।
हरिम् अपि दरदूरे स्वामिनं तत्र चासीन्
महसि विनतवक्रप्रस्फुरम्लानवक्त्रा ॥२४३॥
अत्र लज्जामर्षहर्षविषादानां सन्धिः।

अथ शावल्यम् _
शवलत्वं तु भावानां संमर्दः स्यात् परस्परम् ॥२४४॥

यथा _
शक्तः किं नाम कर्तुं स शिशुर् अहह मे मित्रपक्षानधाक्षीद्
आतिष्ठेयं तम् एव द्रुतम् अथ शरणं कुर्युर् एतन् न वीराः।
आं दिव्या मल्लगोष्ठी विहरति स करेणोद्धाराद्रिवर्यं
कुर्याम् अद्यैव गत्वा व्रजभुवि कदनं हा ततः कम्पते धीः ॥२४५॥
अत्र गर्वविषाददैन्यमतिस्मृतिशङ्कामर्षत्रासानां शावल्यम्।

यथा वा _
धिग् दीर्घे नयने ममास्तु मथुरा याभ्यां न सा प्रेक्ष्यते
विद्येयं मम किङ्करीकृतनृपा कालस् तु सर्वङ्करः।
लक्ष्मीकेलिगृहं गृहं मम हहा नित्यं तनुः क्षीयते
सद्मन्य् एव हरिं भजेय हृदयं वृन्दाटवी कर्षति ॥२४६॥
अत्र निर्वेदगर्वशङ्काधृतिविषादमत्यौत्सुक्यानां शावल्यम्।

अथ शान्तिः _
अत्यारूढस्य भावस्य विलयः शान्तिर् उच्यते ॥२४७ ॥

यथा _
विधुरितवदना विदूनभासस्
तम् अघहरं गहने गवेषयन्तः ।
मृदुकलमुरलीं निशम्य शैले
व्रजशिशवः पुलकोज्ज्वला बभूवुः ॥२४८ ॥
अत्र विषादशान्तिः ।

शब्दार्थरसवैचित्री वाचि काचन नास्ति मे ।
यथाकथञ्चिद् एवोक्तं भावोदाहरणं परम् ॥२४९ ॥
त्रयस्त्रिंशद् इमेऽष्टौ च वक्ष्यन्ते स्थायिनश् च ये ।
मुख्यभावाभिधास् त्व् एकचत्वारिंशद् अमी स्मृताः ॥२५० ॥
शरीरेन्द्रियवर्गस्य विकारणां विधायकाः ।
भावाविर्भावजनिताश् चित्तवृत्तय ईरिताः ॥२५१ ॥
क्वचित् स्वाभाविको भावः कश्चिद् आगन्तुकः क्वचित् ।
यस् तु स्वाभाविको भावः स व्याप्यान्तर्बहिःस्थितः ॥२५२ ॥
मञ्जिष्ठाद्ये यथा द्रव्ये रागस् तन्मय ईक्ष्यते ।
अत्र स्यान् नाममात्रेण विभावस्य विभावता ॥२५३ ॥
एतेन सहजेनैव भावेनानुगता रतिः ।
एकरूपापि या भक्तेर् विविधा प्रतिभात्य् असौ ॥२५४ ॥
आगन्तुकस् तु यो भावः पटादौ रक्तिमेव सः ।
तैस् तैर् विभावैर् एवायं धीयते दीप्यतेऽपि च ॥२५५ ॥
विभावनादिवैशिष्ट्याद् भक्तानां भेदतस् तथा ।
प्रायेण सर्वभावानां वैशिष्ट्यम् उपजायते ॥२५६ ॥
विविधानां तु भक्तानां वैशिष्ट्याद् विविधं मनः ।
मनोऽनुसाराद् भावानां तारतम्यं किलोदये ॥२५७ ॥
चित्ते गरिष्ठे गम्भीरे महिष्ठे कर्कशादिके ।
सम्यगुन्मीलिताश् चामी न लक्ष्यन्ते स्फुटं जनैः ॥२५८ ॥
चित्ते लघिष्ठे चोत्ताने क्षोदिष्ठे कोमलादिके ।
मनागुन्मीलिताश् चामी लक्ष्यन्ते बहिर् उल्बणाः ॥२५९ ॥
गरिष्ठं स्वर्णपिण्डाभं लघिष्ठं तुलपिण्डवत् ।
चित्तयुग्मेऽत्र विज्ञया भावस्य पवनोपमा ॥२६० ॥
गम्भीरं सिन्धुवच् चित्तम् उत्तानं पल्वलादिवत् ।
चित्तद्वयेऽत्र भावस्य महाद्रिशिखरोपमा ॥२६१ ॥
पत्तनाभं महिष्ठं स्यात् क्षोदिष्ठं तु कुटिरवत् ।
चित्तयुग्मेऽत्र भावस्य दीपेनेभेन वोपमा ॥२६२ ॥
कर्कशं त्रिविधं प्रोक्तं वज्रं स्वर्णं तथा जतु ।
चित्तत्रयेऽत्र भावस्य ज्ञेया वैश्वानरोपमा ॥२६३ ॥
अत्यन्तकठिनं वज्रम् अकुतश्चन मार्दवम् ।
ईदृशं तापसादीनां चित्तं तावद् अवेक्ष्यते ॥२६४ ॥
स्वर्णं द्रवति भावाग्नेस् तापेनातिगरीयसा ।
जतु द्रवत्वम् आयाति तापलेशेन सर्वतः ॥२६५ ॥
कोमलं च त्रिधैवोक्तं मदनं नवनीतकम् ।
अमृतं चेति भावोऽत्र प्रायः सूर्यातपायते ॥२६६ ॥
द्रवेद् अत्राद्ययुगलम् आतपेन यथायथम् ।
द्रवीभूतं स्वभावेन सर्वदैवामृतं भवेत् ।
गोविन्दप्रेष्ठवर्याणां चित्तं स्याद् अमृतं किल ॥२६७ ॥
कृष्णभक्तिविशेषस्य गरिष्ठत्वादिभिर् गुणैः ।
समवेतं सदामीभिर् द्वित्रैर् अपि मनो भवेत् ॥२६८ ॥
किन्तु सुष्ठु महिष्ठत्वं भावो बाढम् उपागतः ।
सर्वप्रकारम् एवेदं चित्तं विक्षोभयत्य् अलम् ॥२६९ ॥

यथा दानकेलिकौमुद्याम् 4 __
गभीरोऽप्य् अश्रान्तं दुरधिगमपारोऽपि नितराम्
अहार्यां मर्यादां दधद् अपि हरेर् आस्पदम् अपि ।
सतां स्तोमः प्रेमण्य् उदयति समग्रे स्थगयितुं
विकारं न स्फारं जलनिधिर् इवेन्दौ प्रभवति ॥२७० ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ दक्षिणविभागे
भक्तिरससामान्यनिरूपणे व्यभिचारिलहरी चतुर्थी ॥

२।५
स्थायिभावाख्या पञ्चमलहरी

अविरुद्धान् विरुद्धांश् च भावान् यो वशतां नयन् ।
सुराजेव विराजेत स स्थायी भाव उच्यते ॥१ ॥
स्थायी भावो ऽत्र स प्रोक्तः श्रीकृष्णविषया रतिः ।
मुख्या गौणी च सा द्वेधा रसज्ञैः परिकीर्तिता ॥२ ॥

तत्र मुख्या _
शुद्धसत्त्वविशेषात्मा रतिर् मुख्येति कीर्तिता ।
मुख्यापि द्विविधा स्वार्था परार्था चेति कीर्त्यते ॥३ ॥

तत्र स्वार्था _
अविरुद्धैः स्फुटं भावैः पुष्णात्य् आत्मानम् एव या ।
विरुद्धैर् दुःखग्लानिः सा स्वार्था कथिता रतिः ॥४ ॥

अथ परार्था _
अविरुद्धं विरुद्धं च सङ्कुचन्ती स्वयं रतिः ।
या भावम् अनुगृह्णाति सा परार्था निगद्यते ॥५ ॥
शुद्धा प्रीतिस् तथा सख्यं वात्सल्यं प्रियतेत्य् असौ ।
स्वपरार्थ्यैव सा मुख्या पुनः पञ्चविधा भवेत् ॥६ ॥
वैशिष्ट्यं पात्रवैशिष्ट्याद् रतिर् एषोपगच्छति ।
यथार्कः प्रतिबिम्बात्मा स्फटिकादिषु वस्तुषु ॥७ ॥

तत्र शुद्धा __
सामान्यासौ तथा स्वच्छा शान्तिश् चेत्य् आदिमा त्रिधा ।
एषाङ्गकम्पतानेत्रामीलनोन्मीलनादिकृत् ॥८ ॥

तत्र सामान्या __
कञ्चिद् विशेषम् अप्राप्ता साधारणजनस्य या ।
बालिकदेश् च कृष्णे स्यात् सामान्या सा रतिर् मता ॥९ ॥

यथा _
अस्मिन् मथुरावीथ्याम् उदयति मधुरे विरोचने पुरतः ।
कथस्व सखे म्रदिमानं मानसमदनं किम् एति मम ॥१० ॥

यथा वा _
त्रिवर्षा बालिका सेयं वर्षीयसि समीक्ष्यताम् ।
या पुरः कृष्णम् आलोक्य हुङ्कुर्वत्य् अभिधावति ॥११ ॥

अथ स्वच्छा _
तत्तत्साधनतो नानाविधभक्तिप्रसङ्गतः ।
साधाकानां तु वैविध्यं यान्ती स्वच्छा रतिर् मता ॥१२ ॥
यदा यादृशी भक्ते स्याद् आसक्तिस् तादृशं तदा ।
रूपं स्फटिकवद् धत्ते स्वच्छासौ तेन कीर्तिता ॥१३ ॥

यथा _
क्वचित् प्रभुर् इति स्तुवन् क्वचन मित्रम् इत्य् उद्धसन्
क्वचित् तनय इत्य् अवन् क्वचन कान्त इत्य् उल्लसन् ।
क्वचिन् मनसि भावयन् परम एष आत्मेत्य् असाव्
अभूद् विविधसेवया विविधवृत्तिर् आर्यो द्विजः ॥१४ ॥

अनाचान्तधियां तत्तद्भावनिष्ठा सुखार्णवे ।
आर्याणाम् अतिशुद्धानां प्रायः स्वच्छा रतिर् भवेत् ॥१५ ॥

अथ शान्तिः __
मानसे निर्विकल्पत्वं शम इत्य् अभिधीयते ॥१६ ॥

तथ चोक्तम् __
विहाय विषयोन्मुख्यं निजानन्दस्थितिर् यतः
आत्मनः कथ्यते सो ऽत्र स्वभावः शम इत्य् असौ ॥१७ ॥

प्रायः शमप्रधानानां ममतागन्धवर्जिता ।
परमात्मतया कृष्णे जाता शान्तरतिर् मता ॥१८ ॥

यथा _
देवर्षिवीणया पीते हरिलीलामहोत्सवे ।
सनकस्य तनौ कम्पो ब्रह्मानुभविनोऽप्य् अभूत् ॥१९ ॥

यथा वा _
हरिवल्लभसेवया समन्ताद्
अपरवर्गानुभवं किलावधीर्य ।
घनसुन्दरम् आत्मनोऽप्य् अभीष्टं
परमं ब्रह्म दिदृक्षते मनो मे ॥२० ॥

अग्रतो वक्ष्यमाणैस् तु स्वादैः प्रीत्यादिसंश्रयैः ।
रतेर् अस्या असम्पर्काद् इयं शुद्धेति भण्यते ॥२१ ॥
अथ भेदत्रयी हृद्या रतेः प्रीत्यादिर् ईर्यते ।
गाढानुकूलतोत्पन्ना ममत्वेन सदाश्रिता ॥२२ ॥
कृष्णभक्तेष्व् अनुग्राह्यसखिपूज्येष्व् अनुक्रमात् ।
त्रिविधेषु त्रयी प्रीतिः सख्यं वत्सलतेत्य् असौ ॥२३ ॥
अत्र नेत्रादिफुल्लत्वजृम्भणोद्घूर्णनादयः ।
केवला सङ्कुला चेति द्विविधेयं रतित्रयी ॥२४ ॥

तत्र केवला _
रत्यन्तरस्य गन्धेन वर्जिता केवला भवेत् ।
व्रजानुगे रसालादौ श्रीदामादौ वयस्यके ।
गुरौ च व्रजनाथादौ क्रमेणैव स्फुरत्य् असौ ॥२५ ॥

तत्र सङ्कुला _
एषां द्वयोस् त्रयाणां वा सन्निपातस् तु सङ्कुला ।
उद्धवादौ च भीमादौ मथुरादौ क्रमेण सा ।
यस्याधिक्यं भवेद् यत्र स तेन व्यपदिश्यते ॥२६ ॥

अथ प्रीतिः __
स्वस्माद् भवन्ति ये न्यूनास् ते ऽनुग्राह्या हरेर् मताः ।

आराध्यत्वात्मिका तेषां रतिः प्रीतिर् इतीरिता ॥२७॥
तत्रासक्तिकृद् अन्यत्र प्रीतिसंहारिणी ह्य् असौ ॥२८॥

यथा मुकुन्दमालायाम् ४
दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक प्रकामम्।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि ॥२९॥

अथ सख्यम् __
ये स्युस् तुल्या मुकुन्दस्य ते सखायः सतां मताः।
साम्याद् विश्रम्भरूपैषां रतिः सख्यम् इहोच्यते।
परिहासप्रहासादिकारिणीयम् अयन्त्रणा ॥३०॥

यथा _
मां पुष्पितारण्यदिदृक्षयागतं
निमेषविश्लेषविदीर्णमानसाः।
ते संस्पृशन्तः पुलकाञ्चितश्रियो
दूराद् अहंपूर्विकयाद्य रेमिरे ॥३१॥

यथा वा _
श्रीदामदोर्विलसितेन कृतोऽसि कामं
दामोदर त्वम् इह दर्पधुरा दरिद्रः।
सद्यस् त्वया तद् अपि कथनम् एव कृत्वा
देव्यै ह्रिये त्रयम् अदायि ज्वलाञ्जलीनाम् ॥३२॥

अथ वात्सल्यम् __
गुरवो ये हरेर् अस्य ते पूज्या इति विश्रुताः।
अनुग्रहमयी तेषां रतिर् वात्सल्यम् उच्यते।
इदं लालनभव्याशीश् चिबुकस्पर्शनादिकृत् ॥३३॥

यथा _
अग्रासि यन्निरभिसन्धिविरोधभाजः
कंसस्य किङ्करगणैर् गिरितोऽप्य् उदग्रैः।
गास् तत्र रक्षितुम् असौ गहने मृदुर् मे
बालः प्रयात्य् अविरतं बत किं करोमि ॥३४॥

यथा वा _
सुतम् अङ्गुलिभिः स्नुतस्तनी
चिबुकाग्रे दधती दयार्द्रधीः।
समलालयद् आलयात् पुरः
स्थितिभाजं व्रजराजगेहिनी ॥३५॥

मिथो हरेर् मृगाक्ष्याश् च सम्भोगस्यादिकारणम्।
मधुरापरपर्याया प्रियताख्योदिता रतिः।
अस्यां कटाक्षभ्रूक्षेपप्रियवाणीस्मितादयः ॥३६॥

यथा गोविन्दविलासे _
चिरम् उत्कुण्ठितमनसो राधामुरवैरिणोः कोऽपि।
निभृतनिरीक्षणजन्मा प्रत्याशापल्लवो जयति ॥३७॥

यथोत्तरम् असौ स्वादविशेषोल्लासमय्य् अपि।
रतिर् वासनया स्वाद्वी भासते कापि कस्यचित् ॥३८॥

अथ गौणी _
विभावोत्कर्षजो भावविशेषो योऽनुगृह्यते।
सङ्कुचन्त्या स्वयं रत्या स गौणी रतिर् उच्यते ॥३९॥
हासो विस्मय उत्साहः शोकः क्रोधो भयं तथा।
जुगुप्सा चेत्य् असौ भावविशेषः सप्तधोदितः ॥४०॥
अपि कृष्णविभावत्वम् आद्यषट्कस्य सम्भवेत्।
स्याद् देहादिविभावत्वं सप्तम्यास् तु रतेर् वशात् ॥४१॥
हासादाव् अत्र भिन्नेऽपि शुद्धसत्त्वविशेषतः।
परार्थाया रतेर् योगाद् रतिशब्दः प्रयुज्यते ॥४२॥
हासोत्तरा रतिर् या स्यात् सा हासरतिर् उच्यते।
एवं विस्मयरत्याद्या विज्ञेया रतयश् च षट् ॥४३॥
कञ्चित् कालं क्वचिद् भक्ते हासाद्याः स्थायिताम् अमी।
रत्या चारुकृता यान्ति तल्लीलाद्यनुसारतः ॥४४॥
तस्माद् अनियताधाराः सप्त सामयिका इमे।
सहजा अपि लीयन्ते बलिष्ठेन तिरस्कृताः ॥४५॥
काप्य् अव्यभिचरन्ती सा स्वाधारान् स्वस्वरूपतः।
रतिर् आत्यन्तिकस्थायी भावो भक्तजनेऽखिले।
स्युर् एतस्या विनाभावाद् भावाः सर्वे निरर्थकाः ॥४६॥
विपक्षादिषु यान्तोऽपि क्रोधाद्याः स्थायितां सदा।
लभन्ते रतिशून्यत्वान् न भक्तिरसयोग्यताम् ॥४७॥
अविरुद्धैर् अपि स्पृष्टा भावैः सञ्चारिणोऽखिलाः।
निर्वेदाद्या विलीयन्ते नार्हन्ति स्थायितां ततः ॥४८॥
इत्य् अतो मतिगर्वादिभावानां घटते न हि।
स्थायिता कैश्चिद् इष्टापि प्रमाणं तत्र तद्विदः ॥४९॥
सप्त हासादयस् त्व् एते तैस् तैर् नीताः सुपुष्टताम्।
भक्तेषु स्थायितां यान्तो रुचिर् एभ्यो वितन्वते ॥५०॥

तथा चोक्तम् _
अष्टानाम् एव भावानां संस्काराधायिता मता ।
तत्तिरस्कृतसंस्काराः परे न स्थायितोचिताः ॥५१ ॥

तत्र हासरतिः _
चेतोविकासो हासः स्याद् वाग्वेषेहादिवैकृतात् ।
स दृग्विकासनसौष्ठकपोलस्पन्दनादिकृत् ॥५२ ॥
कृष्णसम्बन्धिचेष्टोत्थः स्वयं सङ्कुचदात्मना ।
प्रत्यानुगृह्यमाणोऽयं हासो हासरतिर् भवेत् ॥५३ ॥

यथा _
मया दृग् अपि नार्पिता सुमुखि दध्नि तुभ्यं शपे
सखी तव निरर्गला तद् अपि मे मुखं जिघ्रति ।
प्रशाधि तद् इमां मुधा च्छलितसाधुम् इत्य् अच्युते
वदत्य् अजनि दूतिका हसितरोधने न क्षमा ॥५४ ॥

अथ विस्मयरतिः _
लोकोत्तरार्थवीक्षादेर् विस्मयश् चित्तविस्तृतिः ।
अत्र स्युर् नेत्रविस्तारसाधूक्तिपुलकादयः ।
पूर्वोक्तरीत्या निष्पन्नः स विस्मयरतिर् भवेत् ॥५५ ॥

यथा _
गवां गोपालानाम् अपि शिशुगणः पीतवसनो
लसच्छ्रीवत्साङ्कः पृथुभुजचतुष्कैर् धृतरुचिः ।
कृतस्तोत्रारम्भः स विधिभिर् अजाण्डालिभिर् अलं
परब्रह्मोल्लासान् वहति किम् इदं हन्त किम् इदम् ॥५६ ॥

अथ उत्साहरतिः _
स्थेयसी साधुभिः श्लाघ्यफले युद्धादिकर्मणि ।
सत्वरा मानसासक्तिर् उत्साह इति कीर्त्यते ॥५७ ॥
कालानवेक्षणं तत्र धैर्यत्यागोद्यमादयः ।
सिद्धः पूर्वोक्तविधिना स उत्साह रतिर् भवेत् ॥५८ ॥

यथा _
कालिन्दीतटभुवि पत्रशृङ्गवंशी
निक्वाणैर् इह मुखरीकृताम्बरायाम् ।
विस्फूर्जन्न् अघदमनेन योद्धुकामः
श्रीदामा परिकरम् उद्भटं बबन्ध ॥५९ ॥

अथ शोकरतिः _
शोकस् त्व् इष्टवियोगाद्यैश् चित्तक्लेशभवः स्मृतः ।
विलापपातनिःश्वासमुखशोषभ्रमादिकृत् ।
पूर्वोक्तविधिनैवायं सिद्धः शोकरतिर् भवेत् ॥६० ॥

यथा श्रीदशमे 10.7.25
रुदितम् अनु निशम्य तत्र गोप्यो
भृशम् अनुतप्तधियो ऽश्रुपूर्णमुख्यः ।
रुरुदुर् अनुपलभ्य नन्दसूनुं
पवन उपारतपांशुवर्षवेगे ॥६१ ॥

यथा वा _
अवलोक्य फणीन्द्रयन्त्रितं
तनयं प्राणसहस्रवल्लभम् ।
हृदयं न विदीर्यति द्विधा
धिग् इमां मर्त्यतनोः कठोरताम् ॥६२ ॥

अथ क्रोधरतिः _
प्रातिकूल्यादिभिश् चित्तज्वलनं क्रोध ईर्यते ।
पारुष्यभ्रूकुटीनेत्रलौहित्यादिविकारकृत् ॥६३ ॥
एवं पूर्वोक्तवत्सिद्धं विदुः क्रोधरतिं बुधाः ।
द्विधासौ कृष्णतद्वैरिभावत्वेन कीर्तिता ॥६४ ॥

अथ कृष्णविभावाः यथा _
कण्ठसीमनि हरेर् द्युतिभाजं
राधिकामणिसरं परिचित्य ।
तं चिरेण जटिला विकटभ्रू
भङ्गभीमतरदृष्टिर् ददर्श ॥६५ ॥

तद्वैरिविभावाः यथा __
अथ कंससहोदरोग्रदावे
हरिम् अभ्युद्यति तीव्रहेतिभाजि ।
रभसाद् अलिकाम्बरे प्रलम्ब
द्विषतोऽभूद् भ्रूकुटीपयोदरेखा ॥६६ ॥

अथ भयरतिः _
भयं चित्तातिचाञ्चल्यं मन्तुघोरेक्षणादिभिः ।
आत्मगोपनहृच्छोषविद्रवभ्रमणादिकृत् ॥६७ ॥
निष्पन्नं पूर्ववद् इदं बुधा भयरतिं विदुः ।
एषापि क्रोधरतिवद् द्विविधा कथिता बुधैः ॥६८ ॥

तत्र कृष्णविभावाः _
याचितः पटिमभिः स्यमन्तकं
शौरिणा सदसि गान्दिनीसुतः।
वस्त्रगूढमणिर् एष मूढधीस्
तत्र शुष्यदधरः क्लमं ययौ ॥६९॥

दुष्टविभावजाः यथा _
भैरवं ब्रुवति हन्त हन्त गोकुल
द्वारि वारिदनिभे वृषासुरे।
पुत्रगुप्तिधृतयत्नवैभवा
कम्प्रमूर्तिर् अभवद् व्रजेश्वरी ॥७०॥

अथ जुगुप्सारतिः _
जुगुप्सा स्याद् अहृद्यानुभवाच् चित्तनिमीलनम्।
तत्र निष्ठीवनं वक्त्रकूणनं कुत्सनादयः।
रतेर् अनुग्रहाज् जाता सा जुगुप्सारतिर् मता ॥७१॥

यथा __
यदवधि मम चेतः कृष्णपादारविन्दे
नवनवरसधामन्य् उद्यतं रन्तुम् आसीत्।
तदवधि बत नारीसङ्गमे स्मर्यमाने
भवति मुखविकारः सुष्ठुनिष्ठीवनं च ॥७२॥

रतित्वात् प्रथमैकैव सप्त हासादयस् तथा।
इत्य् अष्टौ स्थायिनो यावद् रसावस्थां न संश्रिताः ॥७३॥
चेत् स्वतन्त्रास् त्रयस्त्रिंशद् भवेयुर् व्यभिचारिणः।
इहाष्टौ सात्त्विकाश् चैते भावाख्यास् तान् असङ्ख्यकाः ॥७४॥
कृष्णान्वयाद् गुणातीतप्रौढानन्दमया अपि।
भान्त्य् अमी त्रिगुणोत्पन्नसुखदुःखमया इव ॥७५॥
तत्र स्फुरन्ति ह्रीबोधोत्साहाद्याः सात्त्विका इव।
तथा राजसवद्गर्वहर्षसुप्तिहसादयः।
विषाददीनतामोहशोकाद्यास् तामसा इव ॥७६॥
प्रायः सुखमयाः शीता उष्णा दुःखमया इह।
चित्रेयं परमानन्दसान्द्राप्य् उष्णा रतिर् मता ॥७७॥
शीतैर् भावैर् बलिष्ठैस् तु पुष्टा शीतायते ह्य् असौ।
उष्णैस् तु रतिर् अत्युष्णा तापयन्तीव भासते ॥७८॥
रतिर् द्विधापि कृष्णाद्यैः श्रुतैर् अवगतैः स्मृतैः।
तैर् विभावादितां यद्भिस् तद्भक्तेषु रसो भवेत् ॥७९॥
यथा दध्यादिकं द्रव्यं शर्करामरिचादिभिः।
संयोजनविशेषेण रसालाख्यो रसो भवेत् ॥८०॥
तद् अत्र सर्वथा साक्षात् कृष्णाद्यनुभवाद्भुतः।
प्रौढानन्दचमत्कारो भक्तैः कोऽप्य् अनुरस्यते ॥८१॥
स रत्यादिविभावाद्यैर् एकीभावमयोऽपि सन्।
ज्ञप्ततत्तद्विशेषश् च तत्तदुद्भेदतो भवेत् ॥८२॥

यथा चोक्तम् _
प्रतीयमानाः प्रथमं विभावाद्यास् तु भागशः।
गच्छन्तो रसरूपत्वं मिलिता यान्त्य् अखण्डताम् ॥८३॥
यथा मरिचखण्डादेर् एकीभावे प्रपानके।
उद्भासः कस्यचित् क्वापि विभावादेस् तथा रसे ॥८४॥

रते कारणभूता ये कृष्णकृष्णप्रियादयः।
स्तम्भाद्याः कारभूताश् च निर्वेदाद्याः सहायकाः ॥८५॥
हित्वा कारणकार्यादिशब्दवाच्यत्वम् अत्र ते।
रसोद्बोधे विभावादिव्यपदेशत्वम् आप्नुयुः ॥८६॥
रतेस् तु तत्तदास्वादविशेषायातियोग्यताम्।
विभावयन्ति कुर्वन्तीत्य् उक्ता धीरैर् विभावकाः ॥८७॥
तां चानुभावयन्त्य् अन्तस् तद्वन्त्य् आस्वादनिर्भराम्।
इत्य् उक्ता अनुभावास् ते कटाक्षाद्याः ससात्त्विकाः ॥८८॥
सञ्चारयन्ति वैचित्रीं नयन्ते तां तथाविधाम्।
ये निर्वेदादयो भावास् ते तु सञ्चारिणो मताः ॥८९॥
एतेषां तु तथाभावे भगवत्काव्यनाट्ययोः।
सेवाम् आहुः परं हेतुं केचित् तत्पक्षरागिणः ॥९०॥
किन्तु तत्र सुदुस्तर्कमाधुर्याद्भुतसम्पदः।
रतेर् अस्याः प्रभावोऽयं भवेत् कारणम् उत्तमम् ॥९१॥
महाशक्तिविलासात्मा भावोऽचिन्त्यस्वरूपभाक्।
रत्याख्या इत्य् अयं युक्तो न हि तर्केण बाधितुम्।
भारताद्युक्तिर् एषा हि प्राक्तनैर् अप्य् उदाहृता ॥९२॥

यथोक्तम् उद्यमपर्वणि __
अचिन्त्याः खलु ये भावा न तांस् तर्केण योजयेत्
प्रकृतिभ्यः परं यच् च तद् अचिन्त्यस्य लक्षणम् ॥९३॥

विभावतादीन् आनीय कृष्णादीन् मञ्जुला रतिः।
एतैर् एव तथाभूतैः स्वं संवर्धयति स्फुटम् ॥९४॥
यथा स्वैर् एव सलिलैः परिपूर्य बलाहकान्।
रत्नालयो भवत्य् एभिर् वृष्टैस् तैर् एव वारिधिः ॥९५॥
नवे रत्यङ्कुरे जाते हरिभक्तस्य कस्यचित्।
विभावत्वादिहेतुत्वं किञ्चित् तत् काव्यनाट्ययोः ॥९६॥

हरेर् ईषच्छ्रुतिविधौ रसास्वादः सतां भवेत्।
रतेर् एव प्रभावोऽयं हेतुस् तेषां तथाकृतौ ॥९७॥
माधुर्याद्याश्रयत्वेन कृष्णादींस् तनुते रतिः।
तथानुभूयमानास् ते विस्तीर्णां कुर्वते रतिम् ॥९८॥
अतस् तस्य विभावादिचतुष्कस्य रतेर् अपि।
अत्र साहायिकं व्यक्तं मिथोऽजस्रम् अवेक्ष्यते ॥९९॥
किन्त्व् एतस्याः प्रभावोऽपि वैरूप्ये सति कुञ्चति।
वैरूप्यस् तु विभावादेर् अनौचित्यम् उदीर्यते ॥१००॥
अलौकिक्या प्रकृत्येयं सुदुरूहा रसस्थितिः।
यत्र साधारणतया भावाः साधु स्फुरन्त्य् अमी ॥१०१॥
एषां स्वपरसम्बन्धनियमानिर्णयो हि यः।
साधारण्यं तद् एवोक्तं भावानां पूर्वसूरिभिः ॥१०२॥

तद् उक्तं श्रीभरतेन _
शक्तिर् अस्ति विभावादेः कापि साधारणीकृतौ।
प्रमाता तदभेदेन स्वं यया प्रतिपद्यते ॥१०३॥ इति।

दुःखादयः स्फुरन्त्योऽपि जातु भान्तः स्वीयतया हृदि।
प्रौढानन्दचमत्कारचर्वणाम् एव तन्वते ॥१०४॥
पराश्रयतयाप्य् एते जातु भान्तः सुखादयः।
हृदये परमानन्दसन्दोहम् उपचिन्वते ॥१०५॥
सद्भावश् चेद् विभावादेः किञ्चिन्मात्रस्य जायते।
सद्यश् चतुष्टयाक्षेपात् पूर्णतैवोपपद्यते ॥१०६॥

किं च _
रतिः स्थितानुकार्येषु लौकिकत्वादिहेतुभिः।
रसः स्यान् नेति नाटयज्ञा यद् आहुर् युक्तम् एव तत् ॥१०७॥
अलौकिकी त्व् इयं कृष्णरतिः सर्वाद्भुताद्भुता।
योगे रसविशेषत्वं गच्छन्त्य् एव हरिप्रिये ॥१०८॥
वियोगे त्व् अद्भुतानन्दविवर्तत्वं दधत्य् अपि।
तनोत्य् एषा प्रगाढार्तिभराभासत्वम् ऊर्जिता ॥१०९॥
तत्रापि वल्लवाधीशनन्दनालम्बना रतिः।
सान्द्रानन्दचमत्कारपरमावधिर् इष्यते ॥११०॥
यत्सुखौघलवागस्त्यः पिबत्य् एव स्वतेजसा।
रेमशमाधुरीसाक्षात्कारानन्दाब्धिम् अप्य् अलम् ॥१११॥

किं च _
परमानन्दतादात्म्याद् रत्यादेर् अस्य वस्तुतः।
रसस्य स्वप्रकाशत्वम् अखण्डत्वं च सिध्यति ॥११२॥
पूर्वम् उक्ताद् द्विधा भ्देदान् मुख्यगौणतया रतेः।
भवेद् भक्तिरसोऽप्य् एष मुख्यगौणतया द्विधा ॥११३॥
पञ्चधापि रतेर् ऐक्यान् मुख्यस् त्व् एक इहोदितः।
सप्तधात्र तथा गौण इति भक्तिरसोऽष्टधा ॥११४॥

तत्र मुख्यः _
मुख्यस् तु पञ्चधा शान्तः प्रीतः प्रेयांश् च वत्सलः।
मधुरश् चेत्य् अमी ज्ञेया यथापूर्वम् अनुत्तमाः ॥११५॥

अथ गौणः __
हास्यो ऽद्भुतस् तथा वीरः करुणो रौद्र इत्य् अपि।
भयानकः स बीभत्स इति गौणश् च सप्तधा ॥११६॥
एवं भक्तिरसो भेदाद् द्वयोर् द्वादशधोच्यते।
वस्तुतस् तु पुराणादौ पञ्चधैव विलोक्यते ॥११७॥
श्वेतश् चित्रोऽरुणः शोणः श्यामः पाण्डुरपिङ्गलौ।
गौरो धूम्रस् तथा रक्तः कालो नीतः क्रमाद् अमी ॥११८॥
कपिलो माधवोपेन्द्रौ नृसिंहो नन्दनन्दनः।
बलः कूर्मस् तथा कल्की राघवो भार्गवः किरिः।
मीन इत्य् एषु कथिताः क्रमाद् द्वादश देवताः ॥११९॥
पूर्तेर् विकारविस्तारविक्षेपक्षोभस् तथा।
सर्वभक्तिरसास्वादः पञ्चधा परिकीर्तितः ॥१२०॥
पूर्तिः शान्ते विकाशस् तु प्रीतादिष्व् अपि पञ्चसु।
वीरेऽद्भुते च विस्तारो विक्षेपः करुणोग्रयोः।
भयानकेऽथ बीभत्से क्षोभो धीरैर् उदाहृतः ॥१२१॥
अखण्डसुखरूपत्वेऽप्य् एषाम् अस्ति क्वचित् क्वचित्।
रसेषु गहनास्वादविशेषः कोऽप्य् अनुत्तमः ॥१२२॥
प्रतीयमाना अप्य् अज्ञैर् ग्राम्यैः सपदि दुःखवत्।
करुणाद्या रसाः प्राज्ञैः प्रौढानन्दमया मताः ॥१२३॥
अलौकिकविभावत्वं नीतेभ्यो रतिलीलया।
सदुक्त्या च सुखं तेभ्यः स्यात् सुव्यक्तम् इति स्थितिः ॥१२४॥

तथा च नाट्यादौ _
करुणादाव् अपि रसे जायते यत् परं सुखम्।
सुचेतसाम् अनुभवः प्रमाणं तत्र केवलम् ॥१२५॥

सर्वत्र करुणाख्यस्य रसस्यैवोपपादनात्।
भवेद् रामायणादीनाम् अन्यथा दुःखहेतुता ॥१२६॥
तथात्वे रामपादाब्जप्रेमकल्लोलवारिधिः।
प्रीत्या रामायणं नित्यं हनुमान् शृणुयात् कथम् ॥१२७॥
अपि च _
सञ्चारी स्यात् समानो वा कृष्णरत्याः सुहृद्रतिः।

अधिका पुष्यमाणा चेद् भावोल्लासा रतिः ॥१२८ ॥
फल्गुवैराग्यनिर्दग्धाः शुष्कज्ञानाश् च हैतुकाः ।
मीमांसका विशेषेण भक्त्यास्वादबहिर्मुखाः ॥१२९ ॥
इत्य् एष भक्तिरसिकश् चौराद् इव महानिधिः ।
जरन्मीमांसकाद् रक्ष्यः कृष्णभक्तिरसः सदा ॥१३० ॥
सर्वथैव दुरूहोऽयम् अभक्तैर् भगवद्रसः ।
तत्पादाम्बुजसर्वस्वैर् भक्तैर् एवानुरस्यते ॥१३१ ॥
व्यतीत्य भावनावर्त्म यश् चमत्कारकारभूः ।
हृदि सत्त्वोज्ज्वले बाढं स्वदते स रसो मतः ॥१३२ ॥
भावनायाः पदे यस् तु बुधेनानन्यबुद्धिना ।
भाव्यते गाढसंस्कारैश् चित्ते भावः स कथ्यते ॥१३३ ॥

गोपालरूपशोभां दधद् अपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनात्मा दक्षिणविभागे सुधाम्बुनिधेः ॥१३४ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ दक्षिणविभागे
भक्तिरससामान्यनिरूपणे स्थायिभावलहरी पञ्चमी ।

इति श्रीश्रीभक्तिरसामृतसिन्धौ
सामान्यभगवद्भक्तिरसनिरूपको नाम
दक्षिणविभागः समाप्तः ॥

मुख्यभक्तिरसनिरूपकः
पश्चिमविभागः

३।१
शान्तिभक्तिरसाख्या प्रथमलहरी

धृतमुग्धरूपभारो भागवतार्पितपृथुप्रेमा ।
स मयि सनातनमूर्तिस् तनोतु पुरुषोत्तमस् तुष्टिम् ॥१ ॥
रसामृताब्धेर् भागेऽत्र तृतीये पश्चिमाभिधे ।
मुख्यो भक्तिरसः पञ्चविधः शान्तादीर् ईर्यते ॥२ ॥
अतोऽत्र पाञ्चविध्येन लहर्यः पञ्च कीर्तिताः ।
अथामी पञ्च लक्ष्यन्ते रसाः शान्तादयः क्रमात् ॥३ ॥

तत्र शान्तभक्तिरसः __
वक्ष्यमाणैर् विभावाद्यैः शमिनां स्वाद्यतां गतः
स्थायी शान्तिरतिर् धीरैः शान्तभक्तिरसः स्मृतः ॥४ ॥
प्रायः स्वसुखजातीयं सुखं स्याद् अत्र योगिनाम् ।
किन्त्व् आत्मसौख्यम् अघनं घनं त्व् ईशम् अयं सुखम् ॥५ ॥

तत्रापीशस्वरूपानुभवस्यैवोरुहेतुता ।
दासादिवन्मनोज्ञत्वलीलादेर् न तथा मता ॥६ ॥

तत्र आलम्बनाः _
चतुर्भुजश् च शान्ताश् च अस्मिन्न् आलम्बना मताः ॥७ ॥

तत्र चतुर्भुजः _
श्यामाकृतिः स्फुरति चारुचतुर्भुजोऽयम्
आनन्दराशिर् अखिलात्मसिन्धुतरङ्गः ।
यस्मिन् गते नयनयोः पथि निर्जिहीते
प्रत्यक्पदात् परमहंसमुनेर् मनोऽपि ॥८ ॥

सच्चिदानन्दसान्द्राङ्ग आत्मारामशिरोमणिः ।
परमात्मा परं ब्रह्म शमो दान्तः शुचिर् वशी ॥९ ॥
सदा स्वरूपसम्प्राप्तो हतारिगतिदायकः ।
विभुर् इत्य् आदि गुणवान् अस्मिन्न् आलम्बनो हरिः ॥१० ॥

अथ शान्ताः _
शान्ताः स्युः कृष्णतत्प्रेष्ठकारुण्येन रतिं गताः ।
आत्मारामास् तदीयाध्वबद्धश्रद्धाश् च तापसाः ॥११ ॥

अथ आत्मारामाः _
आत्मारामास् तु सनकसनन्दमुखा मताः ।
प्राधान्यात् सनकादीनां रूपं भक्तिश् च कथ्यते ॥१२ ॥

तत्र रूपम् _
ते पञ्चषाब्दबालाभाश् चत्वारस् तेजसोज्ज्वलाः ।
गौराङ्गा वातवसनाः प्रायेण सहचारिणः ॥१३ ॥

तत्र च भक्तिः _
समस्तगुणवर्जिते करणतः प्रतीचीनतां
गते किम् अपि वस्तुनि स्वयम् अदीपि तावत् सुखम् ।
न यावद् इयम् अद्भुता नवतमालनीलद्युतेर्
मुकुन्द सुखचिद्घना तव बभूव साक्षात्कृतिः ॥१४ ॥

अथ तापसाः _
भक्तिर् मुक्त्यैव निर्विघ्नेत्य् आत्तयुक्तविरक्तताः ।
अनुज्झितमुमुक्षा ये भजन्ते ते तु तापसाः ॥१५ ॥

यथा _

कदा शैलद्रोण्यां पृथुलविटपिक्रोडवसतिर्
वसानः कौपीनं रचितफलकन्दाशनरुचिः।
हृदि ध्यायं ध्यायं मुहुर् इह मुकुन्दाभिधम् अहं
चिदानन्दं ज्योतिः क्षणम् इव विनेष्यामि रजनीः ॥१६॥

भक्तात्मारामकरुणा प्रपञ्चेनैव तापसाः।
शान्ताख्यभावचन्द्रस्य हृदाकाशे कलां श्रिताः ॥१७॥

अथ उद्दीपनाः _
श्रुतिर् महोपनिषदां विविक्तस्थानसेवनम्।
अन्तर्वृत्तिविशेषोऽस्य स्फूर्तिस् तत्त्वविवेचनम् ॥१८॥
विद्याशक्तिप्रधानत्वं विश्वरूपप्रदर्शनम्।
ज्ञानिभक्तेन संसर्गो ब्रह्मसत्रादयस् तथा।
एष्व् असाधारणाः प्रोक्ता बुधैर् उद्दीपना अमी ॥१९॥

अत्र महोपनिषच्छ्रुतिः यथा _
अक्लेशाः कमलभुवः प्रविश्य गोष्ठीं
कुर्वन्तः श्रुतिशिरसां श्रुतिं श्रुतज्ञाः।
उत्तुङ्गं यदुपरसङ्गमाय रङ्गं
योगीन्द्राः पुलकभृतो नवाप्य् अवापुः ॥२०॥

पादाब्जतुलसीगन्धः शङ्खनादो मुरद्विषः।
पुण्यशैलः शुभारण्यं सिद्धक्षेत्रं स्वरापगा ॥२१॥
विषयादिक्षयिष्णुत्वं कालस्याखिलहारिता।
इत्याद्य् उद्दीपना साधारणास् तेषां किलाश्रितैः ॥२२॥

अथ पादाब्जतुलसीगन्धो यथा तृतीये 3.15.43 _
तस्यारविन्दनयनस्य पदारविन्द
किञ्जल्कमिश्रतुलसीमकरन्दवायुः।
अन्तर्गतः स्वविवरेण चकार तेषां
सङ्क्षोभम् अक्षरजुषाम् अपि चित्ततन्वोः ॥२३॥

अथ अनुभावाः _
नासाग्रन्यस्तनेत्रत्वम् अवधूतविचेष्टितम्।
युगमात्रेक्षितगतिर् ज्ञानमुद्राप्रदर्शनम् ॥२४॥
हरेर् द्विष्य् अपि न द्वेषो नातिभक्तिः प्रियेष्व् अपि।
सिद्धतायास् तथा जीवन्मुक्तेश् च बहुमानिता ॥२५॥
नैरपेक्ष्यं निर्ममता निरहङ्कारिता कथा।
मौनम् इत्य् आदयः शीताः स्युर् असाधारणाः क्रियाः ॥२६॥

तत्र नासाग्रनयनत्वं यथा _
नासिकाग्रदृग् अयं पुरो मुनिः
स्पन्दबन्धुरशिरा विराजते।
चित्तकन्दरतटीम् अनाकुलाम्
अस्य नूनम् अवगाहते हरिः ॥२७॥

जृम्भाङ्गमोटनं भक्तेर् उपदेशो हरेर् नतिः।
स्तवादयश् च दासाद्यैः शीताः साधारणाः क्रियाः ॥२८॥

तत्र जृम्भा यथा _
हृदयाम्बरे ध्रुवं ते
भावाम्बरमणिर् उदेति योगीन्द्र।
यद् इदं वदनाम्भोजं
जृम्भाम् अवलम्बते भवतः ॥२९॥

अथ सात्त्विकाः _
रोमाञ्चस्वेदकम्पाद्याः सात्त्विकाः प्रलयं विना ॥३०॥

अथ रोमाञ्चो यथा _
पाञ्चजन्यजनितो ध्वनिर् अन्तः
क्षोभयन् सपदि बिद्धसमाधिः।
योगिनां गिरिगुहानिलयानां
पुद्गले पुलकपालिम् अनैषीत् ॥३१॥

एषां निरभिमानानां शरीरादिषु योगिनाम्।
सात्त्विकास् तु ज्वलन्त्य् एव न तु दीप्ता भवन्त्य् अमी ॥३२॥

अथ सञ्चारिणः _
सञ्चारिनोऽत्र निर्वेदो धृतिर् हर्षो मतिः स्मृतिः।
विषादोत्सुकतावेगवितर्काद्याः प्रकीर्तिताः ॥३३॥

तत्र निर्वेदो यथा _
अस्मिन् सुखघनमूर्तौ परम्
आत्मनि वृष्णिपत्तने स्फुरति
आत्मारामतया मे वृथा
गतो बत चिरं कालः ॥३४॥

अथ स्थायी _
अत्र शान्तिरतिः स्थायी समा सान्द्रा च सा द्विधा ॥३५॥

तत्र आद्या यथा _
समाधौ योगिनस् तस्मिन्न् असम्प्रज्ञातनामनि ।
लीलया मयि लब्धेऽस्य बभूवोत्कम्पिनी तनुः ॥३६ ॥

सान्द्रा यथा _
सर्वाविद्याध्वंसतो यः समस्ताद्
आविर्भूतो निर्विकल्पे समाधौ ।
जाते साक्षाद् यादवेन्द्रे स विन्दन्
मय्य् आनन्दः सान्द्रतां कोटिधासीत् ॥३७ ॥

शान्तो द्विधैष पारोक्ष्यसाक्षात्कारविभेदतः ॥३८ ॥

अथ परोक्ष्यं यथा _
प्रयास्यति महत्तपः सफलतां किम् अष्टाङ्गिका
मुनीश्वर पुरातनी परमयोगचर्याप्य् असौ ।
नराकृतिनवाम्बुदद्युतिधरं परं ब्रह्म मे
विलोचनचमत्कृतिं कथय किं नु निर्मास्यति ॥३९ ॥

यथा वा _
क्षेत्रे कुरोः किम् अपि चण्डकरोपरागे
सान्द्रं महः पथि विलोचनयोर् यदासीत् ।
तन् नीरदद्युतिजयि स्मरद् उत्सुकं मे
न प्रत्यगात्मनि मनो रमते पुरेव ॥४० ॥

साक्षात्कारो यथा _
परमात्मतयातिमेदुराद्
बत साक्षात्करणप्रमोदतः ।
भगवन्न् अधिकं प्रयोजनं
कतरद् ब्रह्मविदोऽपि विद्यते ॥४१ ॥

यथा वा _
हृष्टः कम्बुपतिस्वनैर् भुवि लुठच्चीराञ्चलः सञ्चलन्
मूर्ध्ना रुद्धदृगश्रुभिः पुलकितो द्राग् एष लीनव्रतः ।
अक्ष्णोर् अङ्गनम् अञ्जनत्विषि परब्रह्मण्य् अवाप्ते मुदा
मुद्राभिः प्रकटीकरोत्य् अवमतिं योगी स्वरूपस्थितौ ॥४२ ॥

भवेत् कदाचित् कुत्रापि नन्दसूनोः कृपाभरः ।
प्रथमं ज्ञाननिष्ठोऽपि सोऽत्रैव रतिम् उद्वहेत् ॥४३ ॥

यथा बिल्वमङ्गलोक्तिः __

अद्वैतवीथीपथिकैर् उपास्याः
स्वानन्दसिंहासनलब्धदीक्षाः ।
शठेन केनापि वयं हठेन
दासीकृता गोपवधूविटेन ॥४४ ॥

तत्कारुण्यश्लथीभूतज्ञानसंस्कारसन्ततिः ।
एष भक्तिरसानन्दनिपुणः स्याद् यथा शुकः ॥४५ ॥
शमस्य निर्विकारत्वान् नाट्यज्ञैर् नैष मन्यते ।
शान्त्याख्याया रतेर् अत्र स्वीकारान् न विरुध्यते ॥४६ ॥
शमो मन्निष्ठता बुद्धे१३~ इति श्रीभगवद्वचः ।
तन्निष्ठा दुर्घटा बुद्धेर् एतां शान्तरतिं विना ॥४७ ॥

केवलशान्तोऽपि श्रीविष्णुधर्मोत्तरे यथा __
नास्ति यत्र सुखं दुःखं न द्वेषो न च मत्सरः ।
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः ॥४८ ॥

सर्वथैवम् अहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावम् अर्हन्ति धर्मवीरादयस् तदा ॥४९ ॥
स्थायिनम् एके तु निर्वेदस्थायिनं परे ।
शान्तम् एव रसं पूर्वे प्राहुर् एकम् अनेकधा ॥५० ॥
निर्वेदो विषये स्थायि तत्त्वज्ञानोद्भवः स चेत् ।
इष्टानिष्टवियोगाप्तिकृतस् तु व्यभिचार्य्~ असौ ॥५१ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पश्चिमविभागे मुख्यभक्तिरसपञ्चकनिरूपणे
शान्तभक्तिरसलहरी प्रथमा ।

३।२
प्रीत्तिभक्तिरसाख्या द्वितीयलहरी

श्रीधरस्वामिभिः स्पष्टम् अयम् एव रसोत्तमः ।
रङ्गप्रसङ्गे सप्रेमकाख्यः प्रकीर्तितः ॥१ ॥
रतिस्थायितया नामकौमुदीकृद्भिर् अप्य् असौ ।
शान्तत्वेनायम् एवाद्धा सुदेवाद्यैश् च वर्णितः ॥२ ॥
आत्मोचितैर् विभावाद्यैः प्रीतिर् आस्वादनीयताम् ।
नीता चेतसि भक्तानां प्रीतिभक्तिरसो मतः ॥३ ॥
अनुग्राह्यस्य दासत्वाल् लाल्यत्वाद् अप्य् अयं द्विधा ।
भिद्यते सम्भ्रमप्रीतो गौरवप्रीत इत्य् अपि ॥४ ॥
दासाभिमानिनां कृष्णे स्यात् प्रीतिः सम्भ्रमोत्तरा ।
पूर्ववत् पुष्यमाणोऽयं सम्भ्रमप्रीत उच्यते ॥५ ॥

तत्र आलम्बनाः _
हरिश् च तस्य दासाश् च ज्ञेया आलम्बना इह ॥६ ॥

तत्र हरिः _
आलम्बनोऽस्मिन् द्विभुजः कृष्णो गोकुलवासिषु ।
अन्यत्र द्विभुजः क्वापि कुत्राप्य् एषु चतुर्भुजः ॥७ ॥

तत्र व्रजे _
नवाम्बुधरबन्धुरः करयुगेन वक्राम्बुजे
निधाय मुरलीं स्फुरत्पुरटनिन्दि पङ्काम्बरः ।
शिखण्डकृतशेखरः शिखरिणस् तटे पर्यटन
प्रभुर् दिवि दिवौकसो भुवि धिनोति नः किङ्करान् ॥८ ॥

अन्यत्र द्विभुजो यथा _
प्रभुर् अयम् अनिशं पिशङ्गवासाः
करयुगभाग् अरिकम्बुर् अम्बुदाभः ।
नवघन इव चञ्चलापिनद्धो
रविशशिमण्डलमण्डितश् चकास्ति ॥९ ॥

तत्र चतुर्भुजो यथा ललितमाधवे 5.15 _
चञ्चत्कौस्तुभकौमुदीसमुदयः कौमोदकीचक्रयोः
सख्येनोज्ज्वलितैस् तथा जलजयोर् आढ्यश् चतुर्भिर् भुजैः ।
दिव्यालङ्करणेन सङ्कटतनुः सङ्गी विहङ्गेशितुर्
मां व्यस्मारयद् एष कंसविजयी वैकुण्ठगोष्ठीश्रियम् ॥१० ॥

ब्रह्माण्डकोटिधामैकरोमकूपः कृपाम्बुधिः ।
अविचिन्त्यमहाशक्तिः सर्वसिद्धिनिषेवितः ॥११ ॥
अवतारावलीबीजं सदात्मारामहृद्गुणः ।
ईश्वरः परमाराध्यः सर्वज्ञः सुदृढव्रतः ॥१२ ॥
समृद्धिमान् क्षमाशीलः शरणागतपालकः ।
दक्षिणः सत्यवचनो दक्षः सर्वशुभङ्करः ॥१३ ॥
प्रतापी धार्मिकः शास्त्रचक्षुर् भक्तसुहृत्तमः ।
वदान्यस् तेजसा युक्तः कृतज्ञः कीर्तिसंश्रयः ॥१४ ॥
वरीयान् बलवान् प्रेमवश्य इत्य् आदिभिर् गुणैः ।
युतश् चतुर्विधेष्व् एष दासेष्व् आलम्बनो हरिः ॥१५ ॥

अथ दासाः _
दासास् तु प्रश्रितास् तस्य निदेशवशवर्तिणः ।
विश्वस्ताः प्रभुताज्ञानविनम्रितधियश् च ते ॥१६ ॥

यथा _
प्रभुर् अयम् अखिलैर् गुणैर् गरीयान्
इह तुलनाम् अपरः प्रयाति नास्य ।
इति परिणतनिर्णयेन नम्रान्
हितचरितान् हरिसेवकान् भजध्वम् ॥१७ ॥

चतुर्धामी अधिकृताश्रितपारिषदानुरागाः ॥१८ ॥

तत्र अधिकृताः _
ब्रह्मशङ्करशक्राद्याः प्रोक्ता अधिकृता बुधैः ।
रूपं प्रसिद्धम् एवैषां तेन भक्तिर् उदीर्यते ॥१९ ॥

यथा _
का पर्येत्य् अम्बिकेयं हरिम् अवकलयन् कम्पते कः शिरोऽसौ
तं कः स्तौत्य् एष धाता प्रणमति विलुठन् कः क्षितौ वासवोऽयम् ।
कः स्तब्धो हस्यतेऽद्धा दनुजभिदनुजैः पूर्वजोऽयं ममेत्थं
कालिन्दी जाम्बवत्यां त्रिदशपरिचयं जालरन्ध्राद् व्यतानीत् ॥२० ॥

अथ आश्रिताः _
ते शरण्या ज्ञानिचराः सेवानिष्ठास् त्रिधाश्रिताः ॥२१ ॥

यथा _
केचिद् भीताः शरणम् अभितः संश्रयन्ते भवन्तं
विज्ञातार्थास् त्वदनुभवतः प्रास्य केचिन् मुमुक्षाम् ।
श्रावं श्रावं तव नवनवां माधुरीं साधुवृन्दाद्
वृन्दारण्योत्सव किल वयं देव सेवेमहि त्वाम् ॥२२ ॥

तत्र शरण्याः _
शरण्याः कालियजरासन्धबद्धनृपादयः ॥२३ ॥

यथा _
अपि गहनागसि नागे प्रभुवर मय्य् अद्भुताद्य ते करुणा ।
भक्तैर् अपि दुर्लभया यद् अहं पदमुद्रयोज्ज्वलितः ॥२४ ॥

यथा वा अपराधभञ्जने __
कामादीनां कति न कतिधा पालिता दुर्निदेशास्
तेषां जाता मयि न करुणा न त्रपा नोपशान्तिः ।
उत्सृज्यैतान् अथ यदुपते साम्प्रतं लब्धबुद्धिस्
त्वाम् आयातः शरणम् अभयं मां नियुङ्क्ष्वात्मदास्ये ॥२५ ॥

अथ ज्ञानिचराः _
ये मुमुक्षां परित्यज्य हरिम् एव समाश्रिताः ।
शौनकप्रमुखास् ते तु प्रोक्ता ज्ञानिचराः बुधैः ॥२६ ॥

यथा वा हरिहक्तिसुधोदये _
अहो महात्मन् बहुदोषदुष्टोऽप्य्
एकेन भात्य् एष भवो गुणेन ।
सत्सङ्गमाख्येन सुखावहेन
कृताद्य नो येन कृशा मुमुक्षा ॥२७ ॥

यथा वा पद्यावल्याम् 77 __
ध्यानातीतं किम् अपि परमं ये तु जानन्ति तत्त्वं
तेषाम् आस्तां हृदयकुहरे शुद्धचिन्मात्र आत्मा ।
अस्माकं तु प्रकृतिमधुरः स्मेरवक्त्रारविन्दो
मेघश्यामः कनकपरिधिः पङ्कजाक्षोऽयम् आत्मा ॥२८ ॥

अथ सेवानिष्ठाः _
मूलतो भजनासक्ताः सेवानिष्ठा इतीरिताः ।
चन्द्रध्वजो हरिहयो बहुलाश्वस् तथा नृपाः ।
इक्ष्वाकुः श्रुतदेवाश् च पुण्डरीकादयश् च ते ॥२९ ॥

यथा _
आत्मारामान् अपि गमयति त्वद्गुणो गानगोष्ठीं
शून्योद्याने नयति विहगान् अप्य् अलं भिक्षुचर्याम् ।
इत्य् उत्कर्षं कम् अपि सचमत्कारम् आकर्ण्य चित्रं
सेवायां ते स्फुटम् अघहर श्रद्धया गर्धितोऽस्मि ॥३० ॥

अथ पारिषदाः _
उद्धवो दारुको जैत्रः श्रुतदेवश् च शत्रुजित् ।
नन्दोपनन्दभद्राद्याः पार्षदा यदुपत्तने ॥३१ ॥
नियुक्ताः सन्त्य् अमी मन्त्रसारथ्यादिषु कर्मसु ।
तथापि क्वाप्य् अवसरे परिचर्यां च कुर्वते ।
कौरवेषु तथा भीष्मपरीक्षिद्विदुरादयः ॥३२ ॥

तेषां रूपं यथा _
सरसाः सरसीरुहाक्षवेषास्
त्रिदिवेशावलिजैत्रकान्तिलेशाः ।
यदुवीरसभासदः सदामी
प्रचुरालङ्करणोज्ज्वला जयन्ति ॥३३ ॥

भक्तिः यथा _
शंसन् धुर्जटिनिर्जयादिविरुदं बाष्पावरुद्धाक्षरं
शङ्कापञ्चलवं मदाद् अगणयन् कालाग्निरुद्राद् अपि ।
त्वय्य् एवार्पितबुद्धिर् उद्धवमुखस् त्वत्पार्षदानां गणो
द्वारि द्वारवतीपुरस्य पुरतः सेवोत्सुकस् तिष्ठति ॥३४ ॥

एतेषां प्रवरः श्रीमान् उद्धवः प्रेमविक्लवः ॥३५ ॥

तस्य रूपं __
कालिन्दीमधुरत्विषं मधुपतेर् माल्येन निर्माल्यतां
लब्धेनाञ्चितम् अम्बरेण च लसद्गोरोचनारोचिषा ।
द्वन्द्वेनार्गलसुन्दरेण भुजयोर् जिष्णुम् अब्जेक्षणं
मुख्यं पारिषदेषु भक्तिलहरीरुद्धं भजाम्य् उद्धवम् ॥३६ ॥

भक्तिः यथा _
मूर्धन्य् आहुकशासनं प्रणयते ब्रह्मेशयोः शासिता
सिन्धुं प्रार्थयते भुवं तनुतरां ब्रह्माण्डकोटीश्वरः ।
मन्त्रं पृच्छति माम् अपेशलधियं विज्ञानवारां निधिर्
विक्रीडत्य् असकृद् विचित्रचरितः सोऽयं प्रभुर् मादृशाम् ॥३७ ॥

अथ अनुगाः _
सर्वदा परिचर्यासु प्रभोर् आसक्तचेतसः ।
पुरस्थाश् च व्रजस्थाश् चेत्य् उच्यते अनुगा द्विधा ॥३८ ॥

तत्र पुरस्थाः _
सुचन्द्रो मण्डनः स्तम्बः सुतम्बाद्याः पुरानुगाः ।
एषां पार्षदवत् प्रायो रूपालङ्कारणादयः ॥३९ ॥

सेवा यथा _
उपरि कनकदण्डं मण्डनो विस्तृणीते
धुवति किल सुचन्द्रश् चामरं चन्द्रचारुम् ।
उपहरति सुतम्बः सुष्ठु ताम्बूलवीटीं
विदधति परिचर्याः साधवो माधवस्य ॥४० ॥

अथ व्रजस्थाः _
रक्तकः पत्रकः पत्री मधुकण्ठो मधुव्रतः ।
रसालसुविलासाश् च प्रेमकन्दो मरन्दकः ॥४१ ॥
आनन्दश् चन्द्रहासश् च पयोदो वकुलस् तथा ।
रसदः शारदाद्याश् च व्रजस्था अनुगा मताः ॥४२ ॥

एषां रूपं यथा _
मणिमयवरमण्डनोज्ज्वलाङ्गान्
पुरटजवामधुलिट्पटीरभासः।
निजवपुरनुरूपदिव्यवस्त्रान्
व्रजपतिनन्दनकिङ्करान् नमामि ॥४३॥

सेवा यथा _
द्रुतं कुरु परिष्कृतं बकुल पीतपङ्कांशुकं
वरैर् अगुरुभिर् जलं रचय वासितं वारिद।
रसाल परिकल्पयोर् अगलतादलैर् वीटिकाः
परागपटली गवां दिशम् अरुन्ध पौरन्दरीम् ॥४४॥

व्रजानुगेषु सर्वेषु वरीयान् रक्तको मतः ॥४५॥

अस्य रूपं यथा _
रम्यपिङ्गपटम् अङ्गरोचिषा
खर्वितोरुशतपर्विकारुचम्।
सुष्ठु गोष्ठयुवराजसेविनं
रक्तकण्ठम् अनुयामि रक्तकम् ॥४६॥

भक्तिः यथा _
गिरिवरभृति भर्तृदारकेऽस्मिन्
व्रजयुवराजतया गते प्रसिद्धिम्।
शृणु रसद सदा पदाभिसेवा
पङ्क्तिमरता रतिर् उत्तमा ममास्तु ॥४७॥

धूर्यो धीरश् च वीरश् च त्रिधा पारिषदादिकः ॥४८॥

तत्र धूर्यः _
कृष्णेऽस्य प्रेयसीवर्गे दासादौ च यथायथम्।
यः प्रीतिं तनुते भक्तः स धूर्य इह कीर्त्यते ॥४९॥

यथा _
देवः सेव्यतया यथा स्फुरति मे देव्यस् तथास्य प्रियाः
सर्वः प्राणसमानतां प्रचिनुते तद्भक्तिभाजां गणः।
स्मृत्वा साहसिकं बिभेमि तम् अहं भक्ताभिमानोन्नतं
प्रीतिं तत्प्रणते खरेऽप्य् अविदधद् यः स्वास्थ्यम् आलम्बते ॥५०॥

अथ धीरः _
आश्रित्य प्रेयसीम् अस्य नातिसेवापरोऽपि यः।
तस्य प्रसादपात्रं स्यान् मुख्यं धीरः स उच्यते ॥५१॥

यथा _
कम् अपि पृथगनुच्चैर् नाचरामि प्रयत्नं
यदुकुलकमलार्क त्वत्प्रसादश्रियेऽपि।
समजनि ननु देव्याः पारिजातार्चितायाः
परिजननिखिलान्तःपातिनी मे यदाख्या ॥५२॥

अथ वीरः _
कृपां तस्य समाश्रित्य प्रौढां नान्यम् अपेक्षते।
अतुलां यो वहन कृष्णे प्रीतिं वीरः स उच्यते ॥५३॥

यथा _
प्रलम्बरिपुर् ईश्वरो भवतु का कृतिस् तेन मे
कुमारमकरध्वजाद् अपि न किञ्चिद् आस्ते फलम्।
किम् अन्यद् अहम् उद्धतः प्रभुकृपाकटाक्षश्रिया
प्रिया परिषदग्रिमां न गणयामि भामाम् अपि ॥५४॥

चतुर्थे च 4.20.28 __
जगज्जनन्यां जगदीश वैशसं
स्याद् एव यत्कर्मणि नः समीहितम्
करोषि फल्ग्व् अप्य् उरु दीनवत्सलः
स्व एव धिष्ण्ये ऽभिरतस्य किं तया ॥५५॥

एतेषु तस्य दासेषु त्रिविधेष्व् आश्रितादिषु।
नित्यसिद्धाश् च सिद्धाश् च साधकाः परिकीर्तिताः ॥५६॥

अथ उद्दीपनाः _
अनुग्रहस्य सम्प्राप्तिस् तस्याङ्घ्रिरजसां तथा।
भुक्तावशिष्टभक्तादेर् अपि तद्भक्तसङ्गतिः।
इत्य् आदयो विभावाः स्युर् एष्व् असाधारणा मताः ॥५७॥

तत्र अनुग्रहसम्प्राप्तिः यथा _
कृष्णस्य पश्यत कृपां कृपाद्याः कृपणे मयि।
ध्येयोऽसौ निधने हन्त दृशोर् अध्वानम् अभ्यगात् ॥५८॥

मुरलीशृङ्गयोः स्वानः स्मितपूर्वावलोकनम्।
गुणोत्कर्षश्रुतिः पद्मपदाङ्कनवनीरदाः।
तदङ्गसौरभाद्यास् तु सर्वैः साधारणा मताः ॥५९॥

अत्र मुरलीस्वनो यथा विदग्धमाधवे _
सोत्कण्ठं मुरलीकलापरिमलान् आकर्ण्य घूर्णत्तनोर्
एतस्याक्षिसहस्रतः सुरआतेर् अश्रूणि सस्रुर् भुवि ।
चित्रं वारिधरान् विनापि तरसा वैर् अद्य धारामयैर्
दूरात् पश्यत देवमातृत्कम् अभूद् वृन्दाटवीमण्डलम् ॥६० ॥

अथ अनुभावाः _
सर्वतः स्वनियोगानाम् आधिक्येन परिग्रहः ।
ईर्ष्यालवेन चास्पृष्टा मैत्री तत्प्रणते जने ।
तन्निष्ठाद्याः शीताः स्युर् एष्व् असाधारणाः क्रियाः ॥६१ ॥

तत्र स्वनियोगस्य सर्वत आधिक्यं यथा __
अङ्गस्तम्भारम्भम् उत्तुङ्गयन्तं
प्रेमानन्दं दारुको नाभ्यनन्दत्
कंसारातेर् वीजने येन साक्षाद्
अक्षोदीयान् अन्तरायो व्यधायि ॥६२ ॥

उद्भास्वराः पुरोक्ता ये तथास्य सुहृदादयः ।
विरागाद्याश् च ये शीताः प्रोक्ताः साधारणास् तु ते ॥६३ ॥

तत्र नृत्यम् यथा श्रीदशमे 10.86.38 _
श्रुतदेवोऽच्युतं प्राप्तं स्वगृहान् जनको यथा ।
नत्वा मुनींश् च संहृष्टो धुन्वन् वासो ननर्त ह ॥६४ ॥

यथा वा _
त्वं कलासु विमुखोऽपि नर्तनं
प्रेमनाट्यगुरुणासि पाठितः ।
यद् विचित्रगतिचर्ययाञ्चितश्
चित्रयस्य् अहह चारणान् अपि ॥६५ ॥

अथ सात्त्विकाः _
स्तम्भाद्याः सात्त्विकाः सर्वे प्रीतादित्रितये मताः ॥६६ ॥

यथा
गोकुलेन्द्रगुणगानरसेन
स्तम्भम् अद्भुतम् असौ भजमानः ।
पश्य भक्तिरसमण्डपमूल
स्तम्भतां वहति वैष्णववर्यः ॥६७ ॥

श्रीदशमे 10.85.38 _
स इन्द्रसेनो भगवत्पदानुजं
बिभ्रन् मुहुः प्रेमविभिन्नया धिया ।
उवाच हानन्दजलाकुलेक्षणः
प्रहृष्टरोमा नृप गद्गदाक्षरम् ॥६८ ॥

अथ व्यभिचारिणः _
हर्षो धृतिश् चात्र निर्वेदोऽथ विषण्णता ।
दैन्यं चिन्ता स्मृतिः शङ्का मतिर् औत्सुक्यचापले ॥६९ ॥
वितर्कविगर्ह्रीजाड्यमोहोन्मादावहित्थिकाः ।
बोधः स्वप्नः क्लमो व्याधिर् मृतिश् च व्यभिचारिणः ॥७० ॥
इतरेषां मदादीनां नातिपोषकता भवेत् ।
योगे त्रयः स्युर् धृत्यस् ता अयोगे तु क्लमादयः ।
उभयत्र परे शेषा निर्वेदाद्याः सतां मताः ॥७१ ॥

तत्र हर्षो यथा प्रथमे 1.11.5 __
प्रीत्युत्फुल्लमुखाः प्रोचुर् हर्षगद्गदया गिरा ।
पितरं सर्वसुहृदम् अवितारम् इवार्भकाः ॥७२ ॥

यथा वा _
हरिम् अवलोक्य पुरो भुवि
पतितो दण्डप्रणामशतकामः ।
प्रमदविमुग्धो नृपतिः
पुनर् उत्थानं विसस्मार ॥७३ ॥

क्लमो यथा स्कान्दे _
अशोषयन् मनस् तस्य म्लापयन् मुखपङ्कजम् ।
आधिस् तद्विरहे देव ग्रीष्मे सर इवांशुमान् ॥७४ ॥

निर्वेदो यथा _
धन्याः स्फुरति तव सूर्य कराः सहस्रं
ये सर्वदा यदुपतेः पदयोः पतन्ति ।
बन्ध्यो दृशां दर्शशती ध्रियते ममासौ
दूरे मुहूर्तम् अपि या न विलोकते तम् ॥७५ ॥

अथ स्थायी _
सम्भ्रमः प्रभुताज्ञानात् कम्पश् चेतसि सादरः ।
अनेनैक्यं गता प्रीतिः सम्भ्रमप्रीतिर् उच्यते ।
एषा रसेऽत्र कथिता स्थायिभावतया बुधैः ॥७६ ॥
आश्रितादेः पुरैवोक्तः प्रकारो रतिजन्मनि ।

तत्र पारिषदादेस् तु हेतुः संस्कार एव हि।
संस्कारोद्बोधकास् तस्य दर्शनश्रवणादयः ॥७७ ॥
एषा तु सम्भ्रमप्रीतिः प्राप्नुवत्य् उत्तरोत्तरम्।
वृद्धिं प्रेमा ततः स्नेहस् ततो राग इति त्रिधा ॥७८ ॥

तत्र सम्भ्रमप्रीतिः यथा श्रीदशमे 10.38.6 _
ममाद्यामङ्गलं नष्टं फलवांश् चैव मे भवः।
यन् नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजम् ॥७९ ॥

यथा वा _
कलिन्दनन्दिनीकुलकदम्बवनवल्लभम्।
कदा नमस्करिषामि गोपरूपं तम् ईश्वरम् ॥८० ॥

अथ प्रेमा _
ह्रासशङ्काच्युता बद्धमूला प्रेमेयम् उच्यते।
अस्यानुभावाः कथितास् तत्र व्यसनितादयः ॥८१ ॥

यथा
अणिमादिसौख्यवीचीम् अवीचिदुःखप्रवाहं वा।
नय मां विकृतिर् न हि मे त्वत्पदकमलावलम्बस्य ॥८२ ॥

यथा वा
रुषाज्वलितबुद्धिना भृगुसुतेन शप्तोऽप्य् अलं
मया हृतजगत्त्रयोऽप्य् अतनुकैतवं तन्वता।
विनिन्द्य कृतबन्धनोऽप्य् उरगराजपाशैर् बलाद्
अरज्यत स मय्य् अहो द्विगुणम् एव वैरोचनिः ॥८३ ॥

अथ स्नेहः __
सान्द्रश् चित्तद्रवं कुर्वन् प्रेमा ऽस्नेहऽ इतीर्यते।
क्षणिकस्यापि नेह स्याद् विस्लेषस्य सहिष्णुता ॥८४ ॥

यथा _
दम्भेन बाष्पाम्बुझरस्य केशवं
वीक्ष्य द्रवच्चित्तम् असुस्नुवत् तव।
इत्य् उच्चकैर् धारयतो विचित्ततां
चित्रा न ते दारुक दारुकल्पता ॥८५ ॥

यथा वा _
पत्नीं रत्ननिधेः पराम् उपहरन् पूरेण बाष्पाम्भसां
रज्यन्मञ्जुलकण्ठगर्भलुठितस्तोत्राक्षरोपक्रमः।
चुम्बन् फुल्लकदम्बडम्बरतुलाङ्गैः समीक्षियाच्युतं
स्तब्धोऽप्य् अभ्यधिकां श्रियं प्रणमतां वृन्दाद् दधारोद्धवः ॥८६ ॥

अथ रागः _
स्नेहः स रागो येन स्यात् सुखं दुःखम् अपि स्फुटम्
तत्सम्बन्धलवे ऽप्य् अत्र प्रीतिः प्राणव्ययैर् अपि ॥८७ ॥

यथा _
गुरुर् अपि भुजगाद् भीस् तक्षकात् प्राज्यराज्य
च्युतिर् अतिशायिनी च प्रायचर्या च गुर्वी।
अतसनुत मुदम् उच्चैः कृष्णलीलासुधान्तर्
विहरणसचिवत्वाद् औत्तरेयस्य राज्ञः ॥८८ ॥

यथा वा _
केशवस्य करुणालवेऽपि चेद्
बाडवोऽपि किल षडवो मम।
अस्य यद्य् अदयताकुशस्थली
पूर्णसिद्धिर् अपि मे कुशस्थली ॥८९ ॥

प्राय आद्यद्वये प्रेमा स्नेहः पारिषदेष्व् असौ।
परीक्षिति भवेद्रागो दारुके च तथोद्धवे ॥९० ॥
व्रजानुगेष्व् अनेकेषु रक्तकप्रमुखेषु च।
अस्मिन्न् अभ्युदिते भावः प्रायः स्यात् सख्यलेशभाक् ॥९१ ॥

यथा _
शुद्धान्तान् मिलितं बाष्परुद्धवाग् उद्धवो हरिम्।
किञ्चित्कुञ्चितनेत्रान्तः स्वान्तेन परिषस्वजे ॥९२ ॥

अयोगयोगाव् एतस्य प्रभेदौ कथिताव् उभौ ॥९३ ॥

अथ अयोगः _
सङ्गाभावो हरेर् धीरैर् अयोग इति कथ्यते।
अयोगे तन्मनस्कत्वं तद्गुणाद्यनुसन्धयः ॥९४ ॥
तत् प्राप्त्यपायचिन्ताद्याः सर्वेषां कथिताः क्रियाः।
उत्कण्ठितं वियोगश् चेत्य् अयोगे ऽपि द्विधोच्यते ॥९५ ॥

तत्र उत्कण्ठितम् __
अदृष्टपूर्वस्य हरेर् दिदृक्षोत्कण्ठितं मतम् ॥९६ ॥

यथा नारसिंहे _

चकार मेघे तद्वर्णे बहुमानरतिं नृपः ।
पक्षपातेन तन्नाम्नि मृगे पद्मे च तद्दृशि ॥९७ ॥

यथा व श्रीदशमे 10.38.10 _
अप्य् अद्य विष्णोर् मनुजत्वम् ईयुषोर्
भारावताराय भुवो निजेच्छया
लावण्यधाम्नो भवितोपलम्भनं
मह्यं न न स्यात् फलम् अञ्जसा दृशः ॥९८ ॥

अत्रायोगप्रसक्तानां सर्वेषाम् अपि सम्भवे ।
औत्सुक्यदैन्यनिर्वेदचिन्तानां चापलस्य च ।
जडतोन्मादमोहानाम् अपि स्याद् अतिरिक्तता ॥९९ ॥

तत्र औत्सुक्यं यथा श्रीकृष्णकर्णामृते 41 __
अमून्य् अधन्यानि दिनान्तराणि
हरे त्वदालोकनम् अन्तरेण ।
अनाथबन्धो करुणैकसिन्धो
हा हन्त हा हन्त कथं नयामि ॥१०० ॥

यथा वा
विलोचनसुधाम्बुधेस् तव पदारविन्दद्वयी
विलोचनरसच्छटाम् अनुपलभ्य विक्षुभ्यतः ।
मनो मम मनाग् अपि क्वचिद् अनाप्नुवन् निर्वृतिं
क्षणार्धम् अपि मन्यते व्रजमहेन्द्र वर्षव्रजम् ॥१०१ ॥

दैन्यं यथा तत्रैव१४ _
निबद्धमूर्धाञ्जलिर् एष याचे
नीरन्ध्रदैन्योन्नतिमुक्तकण्ठम् ।
दयाम्बुधे देव भवत्कटाक्ष
दाक्षिण्यलेशेन सकृन् निषिञ्च ॥१०२ ॥

यथा वा __
असि शशिमुकुटाद्यैर् अप्य् अलभ्येक्षणस् त्वं
लघुर् अघहर कीटाद् अप्य् अहं कूटकर्मा ।
इति विसदृशतापि प्रार्थने प्रार्थयामि
स्नपय कृपणबन्धो माम् अपाङ्गच्छटाभिः ॥१०३ ॥

निर्वेदो यथा _
स्फुटं श्रितवतोर् अपि श्रुतिनिषेवया श्लाघ्यतां
ममाभवनिरतयोर् भवतु नेत्रयोर् मन्दयोः ।
भवेन् न हि ययोः पदं मधुरिमश्रियाम् आस्पदं
पदाम्बुजनखाङ्कुराद् अपि विसारि रोचिस् तव ॥१०४ ॥

चिन्ताम् यथा _
हरिपदकमलावलोकतृष्णा
तरलमतेर् अपि योग्यताम् अवीक्ष्य ।
अवनतवदनस्य चिन्तया मे
हरि हरि निःश्वसतो निशाः प्रयाति ॥१०५ ॥

चापलं यथा श्रीकृष्णकर्णामृते 32 __
त्वच्छैशवं त्रिभुवनाद्भुतम् इत्य् अवेहि
मच्चापलं च तव वा मम वाधिगम्यम् ।
तत् किं करोमि विरलं मुरलीविलासि
मुग्धं मुखाम्बुजम् उदीक्षितुम् ईक्षणाभ्याम् ॥१०६ ॥

यथा वा _
ह्रियम् अघहर मुक्त्वा दृक्पतङ्गी ममासौ
भयम् अपि दमयित्वा भक्तवृन्दात् तृषार्ता ।
निरवधिम् अविचार्य स्वस्य च क्षोदिमानं
तव चरणसरोजं लेढुम् अनिच्छतीश ॥१०७ ॥

जडता यथा सप्तमे 7.4.37 _
न्यस्तक्रीडनको बालो जडवत् तन्मनस्तया ।
कृष्णग्रहगृहीतात्मा न वेद जगद् ईदृशम् ॥१०८ ॥

यथा वा _
निमेषोन्मुक्ताक्षः कथम् इह परिस्पन्दविधुरां
तनुं बिभ्रद् भव्यः प्रतिकृतिर् इवास्ते द्विजपतिः ।
अये ज्ञातं वंशीरसिकनवरागव्यसनिना
पुरः श्यामाम्भोदे बत विनिहिता दृष्टिर् अमुना ॥१०९ ॥

उन्मादो यथा सप्तमे 7.4.40 _
नदति क्वचिद् उत्कण्ठो विलज्जो नृत्यति क्वचित् ।
क्वचित् तद्भावनायुक्तस् तन्मयो ऽनुचकार ह ॥११० ॥

यथा वा _
क्वचिन् नटति निष्पटं क्वचिद् असम्भवं स्तम्भते
क्वचिद् विहसति स्फुटं क्वचिद् अमन्दम् आक्रन्दति ।
लसत्य् अनलसं क्वचित् क्वचिद् अपार्थम् आर्तायते
हरेर् अभिनवोद्धुरप्रणयसीधुम् अत्तो मुनिः ॥१११ ॥

मोहो यथा हरिभक्तिसुधोदये __
अयोग्यम् आत्मानम् इतीशदर्शने
स मन्यमानस् तदनाप्तिकातरः।
उद्वेलदुःखार्णवमग्नमानसः
श्रुताश्रुधारो द्विज मूर्च्छितापतत् ॥११२॥

यथा वा
हरिचरणविलोकाब्धितापावलीभिर्
बत विधूतचिदम्भस्य् अत्र नस् तीर्थवर्ये।
श्रुत्पुटपरिवाहेनेशनामामृतानि
क्षिपत ननु सतीर्थाश् चेष्टतां प्राणहंसः ॥११३॥

अथ वियोगः _
वियोगो लब्धसङ्गेन विच्छेदो दनुजद्विषा ॥११४॥

यथा _
बलिसुतभुजषण्डखण्डनाय
क्षतजपुरं पुरुषोत्तमे प्रयाते।
विधूतविधुरबुद्धिर् उद्धवोऽयं
विरहनिरुद्धमना निरुद्धवोऽभूत् ॥११५॥

अङ्गेषु तापः कृशता जागर्यालम्बशून्यता।
अधृतिर् जडता व्याधिर् उन्मादो मूर्च्छितं बुधैः।
वियोगे सम्भ्रमप्रीतेर् दशावस्थाः प्रकीर्तिताः ॥११६॥
अनवस्थित्र् आख्याता चित्तस्यालम्बशून्यता।
अरागिता तु सर्वस्मिन्न् अधृतिः कथिता बुधैः।
अन्येऽष्टौ प्रकटार्थत्वात् तापाद्या न हि लक्षिताः ॥११७॥

तत्र तापो यथा _
अस्मान् दुनोति कमलं तपनस्य मित्रं
रत्नाकरश् च बडवानलगूढमूर्तिः।
इन्दीवरं विधुसुहृत् कथम् ईश्वरं वा
तं स्मारयन् मुनिपते दहतीह सभ्यान् ॥११८॥

कृशता यथा _
दधति तव तथाद्य सेवकानां
भुजपरिघाः कृशतां च पाण्डुतां च।
पतति बत यथा मृणालबुद्ध्या
स्फुटम् इह पाण्डवमित्र पाण्डुपक्षः ॥११९॥

जागर्या यथा _
विरहान् मुरद्विषश् चिरं विधुराङ्गे परिखिन्नचेतसि।
क्षणदाः क्षणदायितोज्झिता बहुलाश्वे बहुलास् तदाभवन् ॥१२०॥

आवलम्बनशून्यता यथा _
विजयरथकुटुम्बिना विनान्यन्
न किल कुटुम्बम् इहास्ति नस् त्रिलोक्याम्।
भ्रमद् इदम् अनवेक्ष्य यत्पदाब्जं
क्वचिद् अपि न व्यवतिष्ठतेऽद्य चेतः ॥१२१॥

अधृतिः यथा _
प्रेक्ष्य पिञ्छकुलम् अक्षि पिधत्ते
नैचिकीनिचयम् उज्झति दूरे।
वष्टि यष्टिम् अपि नाद्य मुरारे
रक्तकस् तव पदाम्बुजरक्तः ॥१२२॥

जडता यथा _
यौधिष्ठिरं पुरम् उपेयुषि पद्मनाभे
खेदानलव्यतिकरैर् अतिविक्लवस्य।
स्वेदाश्रुभिर् न हि परं जलताम् अवापुर्
अङ्गानि निष्क्रियतया च किलोद्धवस्य ॥१२३॥

व्याधिर् यथा _
चिरयति मणिम् अन्वेष्टुं
चलिते मुरभिदि कुशस्थलीपुरतः।
समजनि धृतनवव्याधिः
पवनव्याधिर् यथार्थाख्यः ॥१२४॥

उन्मादो यथा _
प्रोषिते बत निजाधिदैवते
रैवते नवम् अवेक्ष्य नीरदम्।
भ्रान्तधीर् अयम् अधीरम् उद्धवः
पश्य रौति रमते नमस्यति ॥१२५॥

मूर्च्छितं यथा _
समजनि दशा विश्लेषात् ते पदाम्बुजसेविनां
व्रजभुवि तथा नासीन् निद्रालवोऽपि यथा पुरा।
यदुवर दरश्वासेनामी वितर्कितजीविताः
सततम् अधुना निश्चेष्टाङ्गास् तटान्य् अधिशेरते ॥१२६॥

मृतिः यथा _
दनुजदमन याते जीवने त्वय्य् अकस्मात्
प्रचुरविरहतापैर् ध्वन्तहृत्पङ्कजायाम् ।
व्रजम् अभि परितस् ते दासकासारपङ्क्तौ
न किल वसतिम् आर्ताः कर्तुम् इच्छन्ति हंसाः ॥१२७ ॥

अशिवत्वान् न घटते भक्ते कुत्राप्य् असौ मृतिः ।
क्षोभकत्वाद् वियोगस्य जातप्रायेति कथ्यते ॥१२८ ॥

अथ योगः _
कृष्णेन सङ्गमो यस् तु स योग इति कीर्त्यते ।
योगेऽपि कथितः सिद्धिस् तुष्टिः स्थितिर् इति त्रिधा ॥१२९ ॥

तत्र सिद्धिः _
उत्कण्ठिते हरेः प्राप्तिः सिद्धिर् इत्य् अभिधीयते ॥१३० ॥

यथा श्रीकृष्णकर्णामृते 57 _
मौलिश् चन्द्रकभूषणो मरकतस्तम्भाभिरामं वपुर्
वक्त्रं चित्रविमुग्धहासमधुरं बाले विलोले दृशौ ।
वाचः शैशवशीतया मदगजश्लाघ्या विलासस्थितिर्
मन्दं मन्दम् अये क एष मथुरावीथीं मिथो गाहते ॥१३१ ॥

यथा वा श्रीदशमे 10.38.34 _
रथात् तूर्णम् अवप्लुत्य सोऽक्रूरः प्रेमविह्वलः ।
पपात चरणोपान्ते दण्डवद् रामकृष्णयोः ॥१३२ ॥

तुष्टिः _
जाते वियोगे कंसारेः सम्प्राप्तिस् तुष्टिर् उच्यते ॥१३३ ॥

यथा प्रथमे 1.11.10 _
कथं वयं नाथ चिरोषिते त्वयि
प्रसन्नदृष्ट्याखिलतापशोषणम् ।
जीवेम ते सुन्दरहासशोभितम्
अपश्यमाना वदनं मनोहरम् ॥१३४ ॥

यथा वा _
समक्षम् अक्षमः प्रेक्ष्य हरिम् अञ्जलिबन्धने ।
दारुको द्वारकाद्वारि तत्र चित्रदशां ययौ ॥१३५ ॥

स्थितिः _
सहवासो मुकुन्देन स्थितिर् निगदिता बुधैः ॥१३६ ॥

यथा हंसदूते 50१५
पुरस्ताद् आभीरीगणभयदनामा स कठिनो
मणिस्तम्भालम्बी कुरुकुलकथां सङ्कलयिता ।
स जानुभ्याम् अष्टापदभुवनम् अवष्टभ्य भविता
गुरोः शिष्यो नूनं पदकमलसंवाहनरतः ॥१३७ ॥

निजावसरशुश्रूषाविधाने सावधानता ।
पुरस् तस्य निवेशाद्या योगेऽमीषां क्रिया मताः ॥१३८ ॥
केचिद् अस्या रतेः कृष्णभक्त्यास्वादबहिर्मुखाः ।
भवत्वम् एव निश्चित्य न रसावस्थतां जगुः ॥१३९ ॥
इति तावद् असाधीयो यत् पुराणेषु केषुचित् ।
श्रीमद्भागवते चैष प्रकटो दृश्यते रसः ॥१४० ॥

तथा हि एकादशे 11.3.32 _
क्वचित् रुदन्त्य् अच्युतचिन्तया क्वचिद्
धसन्ति नन्दन्ति वदन्त्य् अलौकिकाः ।
नृत्यन्ति गायन्त्य् अनुशीलयन्त्य् अजं
भवन्ति तूष्णीं परम् एत्य निर्वृताः ॥१४१ ॥

सप्तमे च 7.7.34 _
निशम्य कर्माणि गुणान् अतुल्यान्
वीर्याणि लीलातनुभिः कृतानि ।
यदातिहर्षोत्पुलकाश्रुगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥१४२ ॥

एषात्र भक्ताभावानां प्रायकी प्रक्रियोदिता ।
किन्तु कालादिवैशिष्ट्यात् क्वचित् स्यात् सीमलङ्घनम् ॥१४३ ॥

अथ गौरवप्रीतिः _
लाल्याभिमानिनां कृष्णे स्यात् प्रीतिर् गौरवोत्तरा ।
सा विभावादिभिः पुष्टा गौरवप्रीतिर् उच्यते ॥१४४ ॥

तत्र आलम्बनाः _
हरिश् च तस्य लाल्याश् च भवन्त्य् आलम्बना इह ॥१४५ ॥

तत्र हरिः यथा _
अयम् उपहितकर्णः प्रस्तुते वृष्णिवृद्धैर्

यदुपतिर् इतिहासे मन्दहासोज्ज्वलास्यः।
उपदिशति सुधर्मामध्यम् अध्यास्य दीव्यन्
हितम् इह निजयाग्रे चेष्टयैवात्मजान् नः ॥१४६॥

महागुरुर् महाकीर्तिर् महाबुद्धिर् महाबलः।
रक्षी लालक इत्य् आद्यैर् गुणैर् आलम्बनो हरिः ॥१४७॥

अथ लाल्याः _
लाल्याः किल कनिष्ठत्वपुत्रत्वाद्यभिमानिनः।
कनिष्ठाः सारणगदसुभद्रप्रमुखाः स्मृताः।
प्रद्युम्नचारुदेष्णाद्याः साम्बाद्याश् च कुमारकाः ॥१४८॥

एषां रूपं यथा _
अपि मुरान्तकपार्षदमण्डलाद्
अधिकमण्डनवेशगुणश्रियः।
आसतपीतसितद्युतिभिर् युता
यदुकुमारगणाः पुरि रेमिरे ॥१४९॥

एषां भक्तिः यथा _
सग्धिं भजन्ति हरिणा मुखम् उन्नमय्य
ताम्बूलचर्वितम् अदन्ति च दीयमानम्।
घ्राताश् च मूर्ध्नि परिरभ्य भवन्त्य् अदस्राः
साम्बादयः कति पुरा विदधुस् तपांसि ॥१५०॥

रुक्मिणीनन्दनस् तेषु लाल्येषु प्रवरो मतः ॥१५१॥

तस्य रूपम् _
स जयति शम्बरदमनः सुकुमारो यदुकुमारकुलमौलिः।
जनयति जनेषु जनकभ्रान्तिं यः सुष्ठु रूपेण ॥१५२॥

अस्य भक्तिः _
प्रभावति समीक्ष्यतां दिवि कृपाम्बुधिर् मादृशां
स एष परमो गुरुर् गरुडगो यदूनां पतिः।
यतः किम् अपि लालनं वयम् अवाप्य दरोद्धुराः
पुरारिम् अपि सङ्गरे गुरुरुषं तिरस्कुर्महे ॥१५३॥

उभयेषां सदाराध्यधियैव भजताम् अपि।
सेवकानाम् इहैश्वर्यज्ञानस्यैव प्रधानता ॥
लाल्यानां तु स्वसम्बन्धस्फूर्तेर् एव समन्ततः ॥१५४॥
व्रजस्थानां परैश्वर्यज्ञानशून्यधियाम् अपि।
अस्त्य् एव वल्लवाधीशपुत्रत्वैश्वर्यवेदनम् ॥१५५॥

अथ उद्दीपनाः _
उद्दीपनास् तु वात्सल्यस्मितप्रेक्षादयो हरेः ॥१५६॥

यथा _
अग्रे सानुग्रहं पश्यन्न् अग्रजं व्यग्रमानसः।
गदः पदारविन्देऽस्य विदधे दण्डवन्नतिम् ॥१५७॥

अथ अनुभावाः _
अनुभावास् तु तस्याग्रे नीचासननिवेशनम्।
गुरोर् वर्त्मानुसारित्वं धुरस् तस्य परिग्रहः।
स्वैराचारविमोक्षाद्याः शीता लाल्येषु कीर्तिताः ॥१५८॥

तत्र नीचासननिवेशनम यथा _
यदुसदसि सुरेन्द्रैर् द्राग् उपव्रज्यमानाः
सुखदकरकवार्भिर् ब्रह्मणाभ्युक्षिताङ्गः।
मधुरिपुम् अभिवन्द्य स्वर्णपीठानि मुञ्चन्
भुवम् अभि मकराङ्को राङ्कवं स्वीचकार ॥१५९॥

दासैः साधाराणाश् चान्ये प्रोच्यन्तेऽमीषु केचन।
प्रणामो मौनबाहुल्यं सङ्कोचं प्रश्रयाढ्यता।
निजप्राणव्ययेनापि तदाज्ञापरिपालनम् ॥१६०॥
अधोवदनता स्थैर्यं कासहासादिवर्जनम्।
तदीयातिरहःकेलिवार्ताद्युपरमादयः ॥१६१॥

अथ सात्त्विकाः _
कन्दर्प विन्दति मुकुन्दपदारविन्द
द्वन्द्वे दृशोः पदम् असौ किल निष्प्रकम्पा।
प्रालेयबिन्दुनिचितं धृतकण्टका ते
स्विन्नाद्य कण्टकिफलं तनुर् अन्वकार्षीत् ॥१६२॥

अथ व्यभिचारिणः _
अनन्तरोक्ताः सर्वेऽत्र भवन्ति व्यभिचारिणः ॥१६३॥

तत्र हर्षो यथा _
दूरे दरेन्द्रस्य नभस्य् उदीर्णे
ध्वनौ स्थितानां यदुराजधन्याम्।
तनूरुहैस् तत्र कुमारकाणां
नटैश् च हृष्यद्भिर् अकारि नृत्यम् ॥१६४॥

निर्वेदो यथा _
धन्यः साम्ब भवान् सरिङ्गणम् अयन् पार्श्वे रजःकर्बूरो
यस् तातेन विकृष्य वत्सलतया स्वोत्सङ्गम् आरोपितः ।
धिङ् मां दुर्भगम् अत्र शङ्करमयैर् दुर्दैवविस्फूर्जितैः
प्राप्ता न क्षणिकापि लालनरतिः सा येन बाल्ये पितुः ॥१६५ ॥

अथ स्थायी _
देहसम्बन्धितामानाद् गुरुधीर् अत्र गौरवम् ।
तन्मयी लालके प्रीतिर् गौरवप्रीतिर् उच्यते ॥१६६ ॥
स्थायिभावोऽत्र सा चैषाम् आमूलात् स्वयम् उच्छ्रिता ।
कञ्चिद् विशेषम् आपन्ना प्रेमेति स्नेह इत्य् अपि ।
राग इत्य् उच्यते चात्र गौरवप्रीतिर् एव सा ॥१६७ ॥

तत्र गौरवप्रीतिः यथा _
मुद्रां भिनत्ति न रदच्छदयोर् अमन्दां
वक्त्रं च नोन्नमयति स्रवदस्रकीर्णम् ।
धीरः परं किम् अपि सङ्कुचतीं झषाङ्को
दृष्टिं क्षिपत्य् अघभिदश् चरणारविन्दे ॥१६८ ॥

प्रेमा यथा _
द्विषद्भिः क्षोदिष्ठैर् जगदविहितेच्छस्य भवतः
कराद् आकृष्यैव प्रसभम् अभिमन्याव् अपि हते ।
सुभद्रायाः प्रीतिर् दनुजदमन त्वद्विषयिका
प्रपेदे कल्याणी न हि मलिनिमानं लवम् अपि ॥१६९ ॥

स्नेहो यथा _
विमुञ्च पृथुवेपथुं विसृज कण्ठाकुण्ठायितं
विमृज्य मयि निक्षिप प्रसरदश्रुधारे दृशौ ।
करं च मकरध्वज प्रकटकण्टकालङ्कृतं
निधेहि सविधे पितुः कथय वत्स कः सम्भ्रमः ॥१७० ॥

रागो यथा _
विषम् अपि सहसा सुधाम् इवायं
निपिबति चेत् पितुर् इङ्गितं झषाङ्कः ।
विसृजति तदसम्मतिर् यदि स्याद्
विषम् इव तां तु सुधां स एव सद्यः ॥१७१ ॥

त्रिष्व् एवायोगयोगाद्या भेदाः पूर्ववद् ईरिताः ॥१७२ ॥

तत्र उत्कण्ठितम् यथा _
शम्बरः सुमुखि लब्धदुर्विपड्
डम्बरः स रिपुर् अम्बरायितः ।
अम्बुराजमहसं कदा गुरुः
कम्बुराजकरम् ईक्षितास्महे ॥१७३ ॥

अथ वियोगः _
मनो ममेष्टाम् अपि गेण्डुलीलां
न वष्टि योग्यां च तथास्त्रयोग्याम् ।
गुरौ पुरं कौरवम् अभ्युपेते
काराम् इव द्वारवतीम् अवैति ॥१७४ ॥

सिद्धिः _
मिलितः शम्बरपुरतो मदनः पुरतो विलोकयन् पितरम् ।
कोऽहम् इति स्वं प्रमदान् न धीर् अधीर् अप्य् असौ वेद ॥१७५ ॥

तुष्टिः _
मिलितम् अधिष्ठितगरुडं प्रेक्ष्य युधिष्ठिरपुरान् मुरारातिम् ।
अजनि मुदा यदुनगरे सम्भ्रमभूमा कुमाराणाम् ॥१७६ ॥

स्थितिः _
कुञ्चयन्न् अक्षिणी किञ्चिद् बाष्पनिष्पन्दिपक्षिणी ।
वन्दते पादयोर् द्वन्द्वं पितुः प्रतिदिनं स्मरः ॥१७७ ॥

उत्कण्ठितवियोगाद्ये यद् यद् विस्तारितं न हि ।
सम्भ्रमप्रीतिवज् ज्ञेयं तत् तद् एवाखिलं बुधैः ॥१७८ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पश्चिमविभागे मुख्यभक्तिरसपञ्चकनिरूपणे
प्रीतिभक्तिरसलहरी द्वितीया ।

३।३
प्रेयोभक्तिरसाख्या तृतीयलहरी

स्थायिभावो विभावाद्यैः सख्यम् आत्मोचितैर् इह ।
नीतश् चित्ते सतां पुष्टिं रसः प्रेयान् उदीर्यते ॥१ ॥

तत्र आलम्बनाः _
हरिश् च तद्वयस्याश् च तस्मिन्न् आलम्बना मताः ॥२ ॥

तत्र हरिः _
द्विभुजत्वादिभाग् अत्र प्राग्वद् आलम्बनो हरिः ॥३॥

तत्र व्रजे यथा _
महेन्द्रमणिमञ्जुलद्युतिर् अमन्दकुन्दस्मितः
स्फुरत्पुरटकेतकीकुसुमरम्यपट्टाम्बरः।
स्रगुल्लसदुरःस्थलः क्वणितवेणुर् अत्राव्रजन्
व्रजाद् अघहरो हरत्य् अहह नः सखीनां मनः ॥४॥

अन्यत्र यथा _
चञ्चत्कौस्तुभकौमुदीसमुदयं कौमोदकीचक्रयोः
सख्येनोज्ज्वलितैस् तथा जलजयोर् आढ्यं चतुर्भिर् भुजैः।
दृष्ट्वा हारिहरिन्मणिद्युतिहरं शौरिं हिरण्याम्बरं
जग्मुः पाण्डुसुताः प्रमोदसुधया नैवात्मसम्भावनाम् ॥५॥

सुवेषः सर्वसल्लक्ष्मलक्षितो बलिनां वरः।
विविधाद्भुतभाषाविद् वावदूकः सुपण्डितः ॥६॥
विपुलप्रतिभो दक्षः करुणो वीरशेखरः।
विदग्धो बुद्धिमान् क्षन्ता रक्तलोकः समृद्धिमान्।
सुखी वरीयान् इत्य् आद्या गुणास् तस्येह कीर्तिता ॥७॥

अथ तद्वयस्याः _
रूपवेषगुणाद्यैस् तु समाः सम्यगयन्त्रिताः।
विश्रम्भसम्भृतात्मानो वयस्यास् तस्य कीर्तिताः ॥८॥

यथा _
साम्येन भीतिविधुरेण विधीयमान
भक्तिप्रपञ्चम् अनुदञ्चदनुग्रहेण।
विश्रम्भसारनिकुरम्बकरम्बितेन
वन्देतराम् अघहरस्य वयस्यवृन्दम् ॥९॥

ते पुरव्रजसम्बन्धाद् द्विविधाः प्राय ईरिताः ॥१०॥

तत्र पुरसम्बन्धिनः _
अर्जुनो भीमसेनश् च दुहिता द्रुपदस्य च।
श्रीदामभूसुराद्याश् च सखायः पुरसंश्रयाः ॥११॥

एषां सख्यम् यथा _
शिरसि नृपतिर् द्रग् अघ्रासीद् अघारिम् अधीरधीर्
भुजपरिघयोः श्लिष्टौ भीमार्जुनौ पुलकोज्ज्वलौ।
पदकमलयोः सास्रौ दस्रात्मजौ च निपेततुस्
तम् अवशाधियः प्रौढानन्दाद् अरुन्धत पाण्डवाः ॥१२॥

श्रेष्ठः पुरवयस्येषु भगवान् वानरध्वजः ॥१३॥

अस्य रूपं यथा _
गाण्डीवपाणिः करिराजशुण्डा
रम्योरुर् इन्दीवरसुन्दराभः।
रथाङ्गिना रत्नरथाधिरोही
स रोहिताक्षः सुतराम् अराजीत् ॥१४॥

सख्यं यथा _
पर्यङ्के महति सुरारिहन्तुर् अङ्के
निःशङ्कप्रणयनिसृष्टपूर्वकायः।
उन्मीलन्नवनर्मकर्मठोऽयं
गाण्डीवी स्मितवदनाम्बुजो व्यराजीत् ॥१५॥

अथ व्रजसम्बन्धिनः _
क्षणादर्शनतो दीनाः सदा सहविहारिणः।
तदेकजीविताः प्रोक्ता वयस्या व्रजवासिनः।
अतः सर्ववयस्येषु प्रधानत्वं भजन्त्य् अमी ॥१६॥

एषां रूपं यथा _
बलानुजसदृग्वयोगुणविलासवेषश्रियः
प्रियङ्करणवल्लकीदलविषाणवेण्वङ्किताः।
महेन्द्रमणिहाटकस्फटिकपद्मरागत्विषः
सदा प्रणयशालिनः सहचरा हरेः पान्तु वः ॥१७॥

सख्यं यथा _
उन्निद्रस्य ययुस् तवात्र विरतिं सप्त क्षपास् तिष्ठतो
हन्त श्रान्त इवासि निक्षिप सखे श्रीदामपाणौ गिरिम्।
आधिर् विध्यति नस् त्वम् अर्पय करे किं वा क्षणं दक्षिणे
दोष्णस् ते करवाम कामम् अधुना सव्यस्य संवाहनम् ॥१८॥

यथा वा श्रीदशमे 10.12.11 _
इत्थं सतां ब्रह्मसुखानुभूत्या
दास्यं गतानां परदैवतेन।
मायाश्रितानां नरदारकेण
साकं विजह्रुः कृतपुण्यपुञ्जाः ॥१९॥

एषु कृष्णस्य सख्यं यथा _
सहचरनिकुरम्बं भ्रातर् आर्य प्रविष्टं
द्रुतम् अघजठरान्तःकोटरे प्रेक्षमाणः ।
स्खलदशिशिरबाष्पक्षालितक्षामगण्डः
क्षणम् अहम् अवसीदन् शून्यचित्तस् तद् आसम् ॥२० ॥

सुहृदश् च सखायश् च तथा प्रियसखाः परे ।
प्रियनर्मवयस्याश् चेत्य् उक्ता गोष्ठे चतुर्विधाः ॥२१ ॥

तत्र सुहृदः _
वात्सल्यगन्धिसख्यां तु किञ्चित् ते वयसाधिकाः ।
सायुधास् तस्य दुष्टेभ्यः सदा रक्षापरायणाः ॥२२ ॥
सुभद्रमण्डलीभद्रभद्रवर्धनगोभटाः ।
यक्षेन्द्रभटभद्राङ्गवीरभद्रा महागुणाः ।
विजयो बलभद्राद्याः सुहृदस् तस्य कीर्तिताः ॥२३ ॥

एषां सख्यं यथा _
धुन्वन् धावसि मण्डलाग्रम् अमलं त्वं मण्डलीभद्र किं
गुर्वीं नार्य गदां गृहाण विजय क्षोभं वृथा मा कृथाः ।
शक्तिं न क्षिप भद्रवर्धन पुरो गोवर्धनं गाहते
गर्जन्न् एष घनो बली न तु बलीवर्दाकृतिर् दानवः ॥२४ ॥

सुहृत्सु मण्डलीभद्रबलभद्रौ किलोत्तमौ ॥२५ ॥

अत्र मण्डलीभद्रस्य रूपम् यथा __
पाटलपटलसदङ्गो लकुटकरः शेखरी शिखण्डेन ।
द्युतिमण्डलीमलिनिभां भाति दधन् मण्डलीभद्रः ॥२६ ॥

अस्य सख्यं यथा _
वनभ्रमणकेलिभिर् गुरुभिर् अह्नि खिन्नीकृतः
सुखं स्वपितु नः सुहृद् व्रजनिशान्तमध्ये निशि ।
अहं शिरसि मर्दनं मृदु करोमि कर्णे कथां
त्वम् अस्य विसृजन्न् अलं सुबल सक्थिनी लालय ॥२७ ॥

बलदेवस्य रूपं यथा _
गण्डान्तःस्फुरदेककुण्डलम् अलिच्छन्नावतंसोत्पलं
कस्तूरीकृतचित्रकं पृथुहृदि भ्राजिष्णु गुञ्जास्रजम् ।
तं वीरं शरदम्बुदद्युतिभरं संवीतकालाम्बरं
गम्भीरस्वनितं प्रलम्बभुजम् आलम्बे प्रलम्बद्विषम् ॥२८ ॥

अस्य सख्यं यथा _
जनितिथिर् इति पुत्रप्रेमसंवीतयाहं
स्नपयितुम् इह सद्मन्य् अम्बया स्तम्भितोऽस्मि ।
इति सुबल गिरा मे सन्दिश त्वं मुकुन्दं
फणिपतिहृदकच्छे नाद्य गच्छेः कदापि ॥२९ ॥

अत्र सखायः _
कनिष्ठकल्पाः सख्येन सम्बन्धाः प्रीतिगन्धिना ।
विशालवृषभौर्जस्विदेवप्रस्थवरूथपाः ॥३० ॥
मरन्दकुसुमापीडमणिबन्धकरन्धमाः ।
इत्यादयः सखायोऽस्य सेवासख्यैकरागिणः ॥३१ ॥

एषां सख्यं यथा _
विशाल विसिनीदलैः कलय बीजनप्रक्रियां
वरूथप विलम्बितालकवरूथम् उत्सारय ।
मृषा वृषभ जल्पितं त्यज भजाङ्गसंवाहनं
यदुग्रभुजसङ्गरे गुरुम् अगात् क्लमं नः सखा ॥३२ ॥

सर्वेषु सखिषु श्रेष्ठो देवप्रस्थोऽयम् ईरितः ॥३३ ॥

तस्य रूपं यथा _
बिभ्रद् गेण्डुं पाण्डुरोद्भासवासाः
पाशाबद्धोत्तुङ्गमौलिर् बलीयान् ।
बन्धूकाभः सिन्धुर् अस्पर्धिलीलो
देवप्रस्थः कृष्णपार्श्वं प्रतस्थे ॥३४ ॥

अस्य सख्यं यथा _
श्रीदाम्नः पृथुलां भुमाम् अभि शिरो विन्यस्य विश्रामिणं
दाम्नः सव्यकरेण रुद्धहृदयं शय्याविराजत्तनुम् ।
मध्ये सुन्दरि कन्दरस्य पदयोः संवाहनेन प्रियं
देवप्रस्थ इतः कृती सुखयति प्रेम्णा व्रजेन्द्रात्मजम् ॥३५ ॥

अथ प्रियसखाः _
वयस्तुल्याः प्रियसखा सख्यं केवलम् आश्रिताः ।
श्रीदामा च सुदामा च दामा च वसुदामकः ॥३६ ॥
किङ्किणिस्तोककृष्णांशुभद्रसेनविलासिनः ।
पुण्डरीकविटङ्काक्षकलबिङ्कादयोऽप्य् अमी ॥३७ ॥
रमयन्ति प्रियसखाः केलिभिर् विविधैः सदा ।
नियुद्धदण्डयुद्धादिकौतुकैर् अपि केशवम् ॥३८ ॥

एषां सख्यं यथा _
सगद्गदपदैर् हरिं हसति कोऽपि वक्रोदितैः
प्रसार्य भुजयोर् युगं पुलकि कश्चिद् आश्लिष्यति ।
करेण चलता दृशौ निभृतम् एत्य रुन्धे परः
कृशाङ्गि सुखयन्त्य् अमी प्रियसखाः सखायं तव ॥३९॥

एषु प्रियवयस्येषु श्रीदामा प्रवरो मतः ॥४०॥

तस्य रूपम् यथा _
वासः पिङ्गं बिभ्रतं शृङ्गपाणिं
बद्धस्पर्धं सौहृदान् माधवेन ।
ताम्रोष्णीषं श्यामधामाभिरामं
श्रीदामानं दामभाजं भजामि ॥४१॥

सख्यं यथा _
त्वं नः प्रोज्झ्य कठोर यामुनतटे कस्माद् अकस्माद् गतो
दिष्ट्या दृष्टिम् इतोऽसि हन्त निविडाश्लेषैः सखीन् प्रीणय ।
ब्रूमः सत्यम् अदर्शने तव मनाक् का धेनवः के वयं
किं गोष्ठं किम् अभीष्टम् इत्य् अचिरतः सर्वं विपर्यस्यति ॥४२॥

अथ प्रियनर्मवयस्याः
प्रियनर्मवयस्यास् तु पूर्वतोऽप्य् अभितो वराः ।
आत्यन्तिकरहस्येषु युक्ता भावविशेषिणः ।
सुबलार्जुनगन्धर्वास् ते वसन्तोज्ज्वलादयः ॥४३॥

एषां सख्यं यथा _
राधासन्देशवृन्दं कथयति सुबलः पश्य कृष्णस्य कर्णे
श्यामाकन्दर्पलेखं निभृतम् उपहरत्य् उज्ज्वलः पाणिपद्मे ।
पालीताम्बूलम् आस्ये वितरति चतुरः कोकिलो मूर्ध्नि धत्ते
तारादामेति नर्मप्रणयिसहचरास् तन्वि तन्वन्ति सेवाम् ॥४४॥

प्रियनर्मवयस्येषु प्रबलौ सुबलार्जुनौ ॥४५॥

तत्र सुबलस्य रूपं यथा _
तनुरुचिविजितहिरण्यं हरिदयितं हारिणं हरिद्वसनम् ।
सुबलं कुवलयनयनं नयनन्दितबान्धवं वन्दे ॥४६॥

अस्य सख्यं यथा _
वयस्यगोष्ठ्याम् अखिलेङ्गितेषु
विशारदायाम् अपि माधवस्य ।
अन्यैर् दुरूहा सुबलेन सार्धं
संज्ञामयी कापि बभूव वार्ता ॥४७॥

उज्ज्वलस्य रूपं यथा _
अरुणाम्बरम् उच्चलेक्षणं
मधुपुष्पबलिभिः प्रसाधितम् ।
हरिनीलरुचिं हरिप्रियं
मणिहारोज्ज्वलम् उज्ज्वलं भजे ॥४८॥

अस्य सख्यं यथा _
शक्तास्मि मानम् अवितुं कथम् उज्ज्वलोऽयं
दूतः समेति सखि यत्र मिलत्य् अदूरे ।
सापत्रपापि कुलजापि पतिव्रतापि
का वा वृषस्यति न गोपवृषं किशोरी ॥४९॥

उज्ज्वलोऽयं विशेषेण सदा नर्मोक्तिलालसः ॥५०॥

यथा __
स्फुरदतनुतरङ्गावर्धितानल्पवेलः
सुमधुररसरूपो दुर्गमावारपारः ।
जगति युवतिजातिर् निम्नगा त्वं समुद्रस्
तद् इयम् अघहर त्वाम् एति सर्वाध्वनैव ॥५१॥

एतेषु केऽपि शास्त्रेषु केऽपि लोकेषु विश्रुताः ॥५२॥
नित्यप्रियाः सुरचराः साधकाश् चेति ते त्रिधा ।
केचिद् एषु स्थिरा जात्या मन्त्रिवत् तम् उपासते ॥५३॥
तं हासयन्ति चापलाः केचिद् वैहासिकोपमाः ।
केचिद् आर्जवसारेण सरलाः शीलयन्ति तम् ॥५४॥
वामा वक्रिमचक्रेण केचिद् विस्माययन्त्य् अमुम् ।
केचित् प्रगल्भाः कुर्वन्ति वितण्डाम् अमुना ।
सौम्याः सूनृतया वाचा धन्या धिन्वन्ति तं परे ॥५५॥
एवं विविधया सर्वे प्रकृत्या मधुरा अमी ।
पवित्रमैत्रीवैचित्रीचारुताम् उपचिन्वते ॥५६॥

अथ उद्दीपनाः _
उद्दीपना वयोरूपशृङ्गवेणुदरा हरेः ।
विनोदनर्मविक्रान्तिगुणाः प्रेष्ठजनास् तथा ।
राजदेवावतारादिचेष्टानुकरणादयः ॥५७॥

अथ वयः _

वयः कौमारपौगण्डकैशोरं चेह सम्मतम् ।
गोष्ठे कौमारपौगण्डे कैशोरं पुरगोष्ठयोः ॥५८ ॥

तत्र कौमारं यथा _
कौमारं वत्सले वाच्यं ततः सङ्क्षिप्य लिख्यते ॥५९ ॥

यथा श्रीदशमे 10.13.11 __
बिभ्रद् वेणुं जठरपटयोः शृङ्गवेत्रे च कक्षे
वामे पाणौ मसृणकवलं तत्फलान्य् अङ्गुलीषु ।
तिष्ठन् मध्ये स्वपरिसुहृदो हासयन् नर्मभिः स्वैः
स्वर्गे लोके मिषति बुभुजे यज्ञभुग् बालकेलिः ॥६० ॥

अथ पौगण्डम् _
आद्यं मध्यं तथा शेषं पौगण्डं च त्रिधा भवेत् ॥६१ ॥

तत्र आद्यं पौगण्डं _
अधरादेः सुलौहित्यं जठरस्य च तानवम् ।
कम्बुग्रीवोद्गमाद्यं च पौगण्डे प्रथमे सति ॥६२ ॥

यथा _
तुन्दं विन्दति ते मुकुन्द शनकैर् अश्वत्तपत्रश्रियं
कण्ठं कम्बुवद् अम्बुजाक्ष भजते रखात्रयीम् उज्ज्वलाम् ।
आरुन्धे कुरुविन्दकन्दलरुचिं भूचन्द्र दन्तच्छदो
लक्ष्मीर् आधुनिकी धिनोति सुहृदाम् अक्षीणि सा काप्य् असौ ॥६३ ॥

पुष्पमण्डनवैचित्री चित्राणि गिरिधातुभिः ।
पीतपङ्कदुकूलाद्यम् इह प्रोक्तं प्रसाधनम् ॥६४ ॥
सर्वाटवीप्रचारेण नैचिकीचयचारणम् ।
नियुद्धकेलिनृत्यादिशिक्षारम्भोऽत्र चेष्टितम् ॥६५ ॥

यथा _
वृन्दारण्ये समस्तात् सुरभिणि सुरभीवृन्दरक्षाविहारी
गुञ्जाहारी शिखण्डप्रकटितमुकुटः पीतपङ्काम्बरश्रीः ।
कर्णाभ्यां कर्णिकारे दधद् अलम् उरसा फुल्लमल्लीकमाल्यं
नृत्यन् दोर्युद्धरङ्गे नटवद् इह सखीन् नन्दयत्य् एष कृष्णः ॥६६ ॥

अथ मध्यपौगण्डम् _
नासा सुशिखरा तुङ्गा कपोलौ मण्डलाकृती ।
पार्श्वाद्यङ्गं सुवलितं पौगण्डे सति मध्यमे ॥६७ ॥

यथा _
तिलकुसुमविहासिनासिकाश्रीर्
नवमणिदर्पणदर्पनाशिगण्डः ।
हरिर् इह परिमृष्टपार्श्वसीमा
सुखयति सुष्ठु सखीन् स्वशोभयैव ॥६८ ॥

उष्णीषं पङ्कसूत्रोत्थपाशेनात्र तडित्त्विषा ।
यष्टिः श्यामा त्रिहस्तोच्चा स्वर्णाग्रेत्य् आदिमण्डनम् ।
भाण्डीरे क्रीडनं शैलोद्धारणाद्यं च चेष्टितम् ॥६९ ॥

यथा _
यष्टिं हस्तत्रयपरिमितां प्रान्तयोः स्वर्णबद्धां
बिभ्रल्लीलां चटुलचमरीचारुचूडोज्ज्वलश्रीः ।
बद्धोष्णीषः पुरटरुचिना पङ्क्तिपाशेन पार्श्वे
पश्य क्रीडन् सुखयति सखे मित्रवृन्दं मुकुन्दः ॥७० ॥

पौगण्डमध्य एवायं हरिर् दीव्यन् विराजते ।
माध्युर्याद्भुतरूपत्वात् कैशोराग्रांशभाग् इव ॥७१ ॥

अथ शेषपौगण्डम् _
वेणी नितम्बलम्बाग्रा लीलालकलताद्युति ।
अंसयोस् तुङ्गतेत्य् आदि पौगण्डे चरमे सति ॥७२ ॥

यथा _
अग्रे लीलालकलतिकयालङ्कृतं बिभ्रदास्यं
चञ्चद्वेणीशिखरशिखया चुम्बितश्रेणिबिम्बः ।
उत्तुङ्गांसच्छविर् अघहरो रङ्गम् अङ्गश्रियैव
न्यस्यन्न् एव प्रियसवयसां गोकुलान् निर्जिहीते ॥७३ ॥

उष्णीषे वक्रिमा लीलासरसीरुहपाणिता ।
काश्मीरेणोर्ध्वपुण्ड्राद्यम् इह मण्डनम् ईरितम् ॥७४ ॥

यथा _
उष्णीषे दरवक्रिमा करतले व्याजृम्भिलीलाम्बुजं
गौरश्रीर् अलिके किलोर्ध्वतिलकः कस्तूरिकाबिन्दुमान् ।
वेषः केशव पेशलः सुबलम् अप्य् आघूर्णयत्य् अद्य ते
विक्रान्तं किम् उत स्वभावमृदुलां गोष्ठाबलानां ततिम् ॥७५ ॥

अत्र भङ्गी गिरां नर्मसखैः कर्णकथारसः ।
एषु गोकुलबालानां श्रीश्लाघेत्यादिचेष्टितम् ॥७६ ॥

यथा _
धूर्तस् त्वं यद् अवैषि हृद्गतम् अतः कर्णे तव व्याहरे
केयं मोहनतासमृद्धिर् अधुना गोधुक्कुमारीगणे।
अत्रापि द्युतिरत्नरोहणभुवो बालाः सखे पञ्चषाः
पञ्चेषुर् जगतां जये निजधुरां यत्रार्पयन् माद्यति ॥७७॥

अथ कैशोरम् _
कैशोरं पूर्वम् एवोक्तं सङ्क्षेपेणोच्यते ततः ॥७८॥

यथा _
पश्योत्सिक्तबलीत्रयीवरलते वासस् तडिन्मञ्जुले
प्रोन्मीलद्वनमालिकापरिमलस्तोमे तमालत्विषि।
उक्षत्य् अम्बकचातकान् स्मितरसैर् दामोदराम्भोधरे
श्रीदामा रमणीयरोमकलिकाकीर्णाङ्गशाखी बभौ ॥७९॥

प्रायः किशोर एवायं सर्वभक्तेषु भासते।
तेन यौवनशोभास्य नेह काचित् प्रपञ्चिता ॥८०॥

अथ रूपं यथा _
अलङ्कारम् अलङ्कृत्वा तवाङ्गं पङ्कजेक्षण।
सखीन् केवलम् एवेदं धाम्ना धीमन् धिनोति नः ॥८१॥

अथ शृङ्गं यथा _
व्रजनिजवडभीवितर्दिकायाम्
उषसि विषाणवरे रुवत्य् उदग्रम्।
अहह सवयसां तदीयरोम्णाम्
अपि निवहाः समम् एव जाग्रति स्म ॥८२॥

वेणुर् यथा _
सुहृदो न हि यात कातरा
हरिम् अन्वेष्टुम् इतः सुतां रवेः।
कथयन्न् अमुम् अत्र वैणव
ध्वनिदूतः शिखरे धिनोति नः ॥८३॥

शङ्खो यथा _
पाञ्चालीपतयः श्रुत्वा पाञ्चजन्यस्य निस्वनम्।
पञ्चास्य पश्य मुदिताः पञ्चास्यप्रतिमां ययुः ॥८४॥

विनोदो यथा _
स्फुरदरुणदुकूलं जागुडैर् गौरगात्रं
कृतवरकवरीकं रत्नताटङ्ककर्णम्।
मधुरिपुम् इह राधावेषम् उद्वीक्ष्य साक्षात्
प्रियसखि सुबलोऽभूद् विस्मितः सस्मितश् च ॥८५॥

अथानुभावाः _
नियुद्धकन्दुकद्यूतवाह्यवाहादिकेलिभिः।
लगुडालगुडिक्रीडासङ्गैरेश् चास्य तोषणम् ॥८६॥
पल्यङ्कासनदोलासु सहस्वापोपवेशनम्।
चारुचित्रपरीहासो विहारः सलिलाशये ॥८७॥
युग्मत्वे लास्यगानाद्याः सर्वसाधारणाः क्रियाः ॥८८॥

तत्र नियुद्धेन तोषणं यथा _
अघहर जितकाशी युद्धकण्डूलबाहुस्
त्वम् अटसि सखिगोष्ठ्याम् आत्मवीर्यं स्तुवानः।
कथय किम् उ ममोच्चैश् चण्डदोर्दण्डचेष्टा
विरमितरणरङ्गो निःसहाङ्गः स्थितोऽसि ॥८९॥

युक्तायुक्तादिकथनं हितकृत्ये प्रवर्तनम्।
प्रायः पुरःसरत्वाद्याः सुहृदाम् ईरिताः क्रियाः ॥९०॥
ताम्बुलाद्यर्पणं वक्त्रे तिलकस्थासकक्रिया।
पत्राङ्कुरविलेखादि सखीनां कर्म कीर्तितम् ॥९१॥
निर्जितीकरणं युद्धे वस्त्रे धृत्वास्य कर्षणम्।
पुष्पाद्याच्छेदनं हस्तात् कृष्णेन स्वप्रसाधनम्।
हस्ताहस्तिप्रसङ्गाद्याः प्रोक्ताः प्रियसखक्रियाः ॥९२॥
दूत्यं व्रजकिशोरीषु तासां प्रणयगामिता।
ताभिः केलिकलौ साक्षात् सख्युः पक्षपरिग्रहः ॥९३॥
असाक्षात् स्वस्वयूथेशापक्षस्थापनचातुरी।
कर्णाकर्णिकथाद्याश् च प्रियनर्मसखक्रियाः ॥९४॥
वन्यरत्नालङ्कारैर् माधवस्य प्रसाधनम्।
पुरस् तौर्यत्रिकं तस्य गवां सम्भालनक्रियाः ॥९५॥
अङ्गसंवाहनं माल्यगुम्फनं बीजनादयः।
एताः साधारणा दासैर् वयस्यानां क्रिया मताः।
पूर्वोक्तेष्व् अपराश् चात्र ज्ञेया धीरैर् यथोचितम् ॥९६॥

अथ सात्त्विकाः तत्र स्तम्भो यथा _
निष्क्रामन्तं नागम् उन्मथ्य कृष्णं
श्रीदामायं द्राक् परिष्वक्तुकामः।
लब्धस्तम्भौ सम्भ्रमारम्भशाली
बाहुस्तम्भौ पश्य नोत्क्षेप्तुम् ईष्टे ॥९७॥

स्वेदो यथा _
क्रीडोत्सवानन्दरसं मुकुन्दे
स्वात्यम्बुदे वर्षति रम्यघोषे।
श्रीदाममूर्तिर् वरशुक्तिर् एषा
स्वेदाम्बुमुक्तापटलीं प्रसूते ॥९८॥

रोमाञ्चो यथा दानकेलिकौमुद्याम् 37 __
अपि गुरुपुरस् त्वाम् उत्सङ्गे निधाय विसङ्कटे
विपुलपुलकोल्लासं स्वरा परिष्वजते हरिः।
प्रणयति तव स्कन्धे चासौ भुजं भुजगोपमं
क्व सुबल पुरा सिद्धक्षेत्रे चकथ कियत्तपः ॥९९॥

स्वरभेदादि चतुष्कं यथा _
प्रविष्टवति माधवे भुजगराजभाजं ह्रदं
तदीयसुहृदस् तदा पृथुलवेपथुव्याकुलाः।
विवर्णवपुषः क्षणाद् विकटघर्घरध्मायिनो
निपत्य निकटस्थलीभुवि सुषुप्तिम् आरेभिरे ॥१००॥

अश्रु यथा _
दावं समीक्ष्य विचरन्तम् इषीकतुलैस्
तस्य क्षयार्थम् इव बाष्पझरं किरन्ती।
स्वाम् अप्य् उपेक्ष्य तनुम् अम्बुजमालभारिण्य्
आभीरवीथिर् अभितो हरिम् आवरिष्ट ॥१०१॥

अथ व्यभिचारिणः _
औग्र्यं त्रासं तथालस्यं वर्जयित्वाखिलाः परे।
रसे प्रेयसि भावज्ञैः कथिता व्यभिचारिणः ॥१०२॥
तत्रायोगे मदं हर्षं गर्वं निद्रां धृतिं विना।
योगे मृतिं क्लमं व्याधिं विनापस्मृतिदीनते ॥१०३॥

तत्र हर्षो यथा _
निष्क्रमय्य किल कालियोरगं
वल्लवेश्वरसुते समीयुषि।
सम्मदेन सुहृदः स्खलत्पदास्
तद्गिरश् च विवशाङ्गतां दधुः ॥१०४॥

अथ स्थायी _
विमुक्तसम्भ्रमा या स्याद् विश्रम्भात्मा रतिर् द्वयोः।
प्रायः समानयोर् अत्र सा सख्यस्थायिशब्दभाक् ॥१०५॥

विश्रम्भो गाढविश्वासविशेषः यन्त्रणोज्झितः।
एषा सख्यरतिर् वृद्धिं गच्छन्ती प्रणयः क्रमात्।
प्रेमा स्नेहस् तथा राग इति पञ्चभिदोदिता ॥१०६॥

तत्र सख्यरतिः यथा _
मुकुन्दो गान्दिनीपुत्र त्वया सन्दिश्यताम् इति।
गरुडाङ्क गुडाकेशस् त्वां कदा परिरप्स्यते ॥१०७॥

प्रणयः _
प्राप्तायां सम्भ्रमादीनां योग्यतायाम् अपि स्फुटम्।
तद्गन्धेनाप्य् असंस्पृष्टा रतिः प्रणय उच्यते ॥१०८॥

यथा _
सुरैस् त्रिपुरजिन् मुखैर् अपि विधीयमानस्तुतेर्
अपि प्रथयतः पराम् अधिकपारमेष्ठ्यश्रियम्।
दधत्पुलकिनं हरेर् अधिशिरोधि सव्यं भुजं
समस्कुरुत पांशुमान् शिरसि चन्द्रकान् अर्जुनः ॥१०९॥

प्रेम यथा _
भवत्य् उदयतीश्वरे सुहृदि हन्त राज्यच्युतिर्
मुकुन्द वसतिर् वने परगृहे च दास्यक्रिया।
इयं स्फुटम् अमङ्गला भवतु पाण्डवानां गतिः
परन्तु ववृधे त्वयि द्विगुणम् एव सख्यामृतम् ॥११०॥

स्नेहो यथा श्रीदशमे 10.15.18 __
अन्ये तदनुरूपाणि मनोज्ञानि महात्मनः।
गायन्ति स्म महाराज स्नेहक्लिन्नधियः शनैः ॥१११॥

यथा वा __
आर्द्राङ्गस्खलदच्छधातुषु सुहृद्गोत्रेषु लीलारसं
वर्षत्य् उच्छ्वसितेषु कृष्णमुदिरे व्यक्तं बभूवाद्भुतम्।
या प्राग् आस्त सरस्वती द्रुतम् असौ लीनोपकण्ठस्थले
या नासीद् उदगाद् दृशोः पथि सदा नीरोरुधावात्र सा ॥११२॥

रागो यथा _
अस्त्रेण दुष्परिहरा हरये व्यकारि
या पत्रिपङ्क्तिर् अकृपेण कृपीसुतेन।
उत्प्लुत्य गाण्डिवभृता हृदि गृह्यमाणा
जातास्य सा कुसुमवृष्टिर् इवोत्सवाय ॥११३॥

यथा वा _
कुसुमान्य् अवचिन्वतः समन्ताद्
वनमालारचनोचितान्य् अरण्ये ।
वृषभस्य वृषार्कजा मरीचिर्
दिवसार्धेऽपि बभूव कौमुदीव ॥११४॥

अथ अयोगे उत्कण्ठितं यथा _
धनुर्वेदम् अधीयानो मध्यमस् त्वयि पाण्डवः ।
बाष्पसङ्कीर्णया कृष्णः गिराश्लेषं व्यजिज्ञपत् ॥११५॥

अथ वियोगे यथा _
अघस्य जठरानलात् फणिह्रदस्य च क्ष्वेडतो
दवस्य कवलाद् अपि त्वम् अवितात्र येषाम् अभूः ।
इतस् त्रितयतोऽप्य् अतिप्रकटघोरधाटीधरात्
कथं न विरहज्वराद् अवसितान् सखीन् अद्य नः ॥११६॥

अत्रापि पूर्ववत् प्रोक्तास् तापाद्यास् ता दशा दश ॥११७॥

तत्र तापः _
प्रपन्नाः भाण्डीरेऽप्य् अधिकशिशिरे चण्डिम् अभरं
तुषारेऽपि प्रौढिं दिनकरसुतास्रोतसि गतः ।
अपूर्वः कंसारे सुबलमुखमित्रावलिम् असौ
बलीयान् उत्तापस् तव विरहजन्मा ज्वलयति ॥११८॥

कृशता _
त्वयि प्राप्ते कंसक्षितिपतिविमोक्षाय नगरीं
गभीराद् आभीरावलितनुषु खेदाद् अनुदिनम् ।
चतूर्णां भूतानाम् अजनि तनिमा दानवरिपो
समीरस्य घ्रानाध्वनि पृथुलता केवलम् अभूत् ॥११९॥

जागर्या यथा _
नेत्राम्बुजद्वन्द्वम् अवेक्ष्य पूर्णं
बाष्पाम्बुपूरेण वरूथपस्य ।
तत्रानुवृत्तिं किल यादवेन्द्र
निर्विद्य निद्रामधुपी मुमोच ॥१२०॥

आलम्बनशून्यता _
गते वृन्दारण्यात् प्रियसुहृदि गोष्ठेश्वरसुते
लघुभूतं सद्यः पतदतितराम् उत्पतद् अपि ।
न हि भ्रामं भ्रामं भजति चटुलं तुलम् इव मे
निरालम्बं चेतः क्वचिद् अपि विलम्बं लवम् अपि ॥१२१॥

अधृतिः _
रचयति निजवृत्तौ पाशुपाल्ये निवृत्तिं
कलयति च कलानां विस्मृतौ यत्नकोटिम् ।
किम् अपरम् इह वाच्यं जीवितेऽप्य् अद्य धत्ते
यदुवर विरहात् ते नार्थितां बन्धुवर्गः ॥१२२॥

जडता _
अनाश्रितपरिच्छदाः कृशविशीर्णरुक्षाङ्गकाः
सदा विफलवृत्तयो विरहिताः किल च्छायया ।
विरावपरिवर्जितास् तव मुकुन्द गोष्ठान्तरे
स्फुरति सुहृदां गणाः शिखरजातवृक्षा इव ॥१२३॥

व्याधिः _
विरहज्वरसंज्वरेण ते ज्वलिता विश्लथगात्रबन्धना ।
यदुवीर तटे विचेष्टते चिरम् आभीरकुमारमण्डली ॥१२४॥

उन्मादः _
विना भवदनुस्मृतिं विरहविभ्रमेणाधुना
जगद्व्यवहृतिक्रमं निखिलम् एव विस्मारिताः ।
लुण्ठन्ति भुवि शेरते बत हसन्ति धावन्त्य् अमी
रुदन्ति मथुरापते किम् अपि वल्लवानां गणाः ॥१२५॥

मूर्च्छितम् _
दीव्यतीह मधुरे मथुरायां
प्राप्य राज्यम् अधुना मधुनाथे ।
विश्वम् एव मुदितं रुदितान्धे
गोकुले तु मुहुर् आकुलताभूत् ॥१२६॥

मृतिः _
कंसारेर् विरहज्वरोर्मिजनितज्वालावलीजर्जरा
गोपाः शैलतटे तथा शिथिलितश्वासाङ्कुराः शेरते ।
वारं वारम् अखर्वलोचनजलैर् आप्लाव्य तान् निश्चलान्
शोचन्त्य् अद्य यथा चिरं परिचयस्निग्धाः कुरङ्गा अपि ॥१२७॥

प्रोक्तेयं विरहावस्था स्पष्टलीलानुसारतः ।
कृष्णेन विप्रयोगः स्यान् न जातु व्रजवासिनाम् ॥१२८॥

तथा च स्कान्दे मथुराखण्डे _

वत्सैर् वत्सतरीभिश् च सदा क्रीडति माधवः।
वृन्दावनान्तरगतः सरामो बालकैर् वृतः ॥१२९॥

अथ योगे सिद्धि॰ यथा _
पाण्डवः पुण्डरीकाक्षं प्रेक्ष्य चक्रिनिकेतने।
चित्राकारं भजन्न् एव मित्राकारम् अदर्शयत् ॥१३०॥

तुष्टि॰ यथ श्रीदशमे 10.71.27 _
तं मातुलेयं परिरभ्य निर्वृतो
भीमः स्मयन् प्रेमजवाकुलेन्द्रियः।
यमौ किरीटी च सुहृत्तमं मुदा
प्रवृद्धबाष्पः परिरेभिरेऽच्युतम् ॥१३१॥

यथा वा _
कुरुजाङ्गले हरिम् अवेक्ष्य पुरः
प्रियसङ्गमं व्रजसुहृन्निकराः।
भुजमण्डलेन मणिकुण्डलिनः
पुलकाञ्चितेन परिषष्वजिरे ॥१३२॥

स्थिति॰ यथा श्रीदशमे 10.12.12
यत्पादपांसुर् बहुजन्मकृच्छ्रतो
धृतात्मभिर् योगिभिर् अप्य् अलभ्यः।
स एव यद्दृग्विषयः स्वयं स्थितः
किं वर्ण्यते दिष्टम् अतो व्रजौकसाम् ॥१३३॥

द्वयोर् अप्य् एकजातीयभावमाधुर्यभाग् असौ।
प्रेयान् काम् अपि पुष्णाति रसश् चित्तचमत्कृतिम् ॥१३४॥
प्रीते च वत्सले चापि कृष्णतद्भक्तयोः पुनः।
द्वयोर् अन्योन्यभावस्य भिन्नजातीयता भवेत् ॥१३५॥
प्रेयान् एव भवेत् प्रेयान् अतः सर्वरसेष्व् अयम्।
सख्यसम्पृक्तहृदयैः सद्भिर् एवानुबुध्यते ॥१३६॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पश्चिमविभागे मुख्यभक्तिरसपञ्चकनिरूपणे
प्रेयोभक्तिरसलहरी तृतीया।

३।४
वत्सलभक्तिरसाख्या चतुर्थलहरी

विभावाद्यैस् तु वात्सल्यं स्थायी पुष्टिम् उपागतः।
एष वत्सलनामात्र प्रोक्तो भक्तिरसो बुधैः ॥१॥

तत्र आलम्बनाः _
कृष्णं तस्य गुरूंश् चात्र प्राहुर् आलम्बनान् बुधाः ॥२॥

तत्र कृष्णो यथा _
नवकुवलयदामश्यामलं कोमलाङ्गं
विचलदलकभृङ्गक्रान्तनेत्राम्बुजान्तम्।
व्रजभुवि विहरन्तं पुत्रम् आलोकयन्ती
व्रजपतिदयितासीत् प्रस्नवोत्पीडदिग्धा ॥३॥

श्यामाङ्गो रुचिरः सर्वसल्लक्षणयुतो मृदुः।
प्रियवाक् सरलो ह्रीमान् विनयी मान्यमानकृत्।
दातेत्यादिगुणो कृष्णो विभाव इति कथ्यते ॥४॥
एवं गुणस्य चास्यानुग्राह्यत्वाद् एव कीर्तिता।
प्रभावानास्पदतया वेद्यस्यात्र विभावता ॥५॥

तथा श्रीदशमे 10.8.45 __
त्रय्या चोपनिषद्भिश् च साङ्ख्ययोगैश् च सात्वतैः।
उपगीयमानमाहात्म्यं हरिं सामन्यतात्मजम् ॥६॥

यथा वा _
विष्णुर् नित्यम् उपास्यते सखि मया तेनात्र नीताः क्षयं
शङ्के पूतनिकादयः क्षितिरुहौ तौ वात्ययोन्मूलितौ।
प्रत्यक्षं गिरिर् एष गोष्टपतिना रामेण सार्धं धृतस्
तत्तत्कर्म दुरन्वयं मम शिशोः केनास्य सम्भाव्यते ॥७॥

अथ गुरवः _
अधिकंमन्यभावेन शिक्षाकारितयापि च।
लालकत्वादिनाप्य् अत्र विभावा गुरवो मताः ॥८॥

यथा _
भूर्यनुग्रहचितेन चेतसा
लालनोत्कम् अभितः कृपाकुलम्।
गौरवेण गुरुणा जगद्गुरोर्
गौरवं गणम् अगण्यम् आश्रये ॥९॥

ते तु तस्यात्र कथिता व्रजराज्ञी व्रजेश्वरः।
रोहिणी ताश् च वल्लव्यो याः पद्मजहृतात्मजाः ॥१०॥
देवकी तत्सपत्न्यश् च कुन्ती चानकदुन्दुभिः।

सान्दीपनिमुखाश् चान्ये यथापूर्वम् अमी वराः।
व्रजेश्वरीव्रजाधीशौ श्रेष्ठौ गुरुजनेष्व् इमौ ॥११॥

तत्र व्रजेश्वर्या रूपं यथा श्रीदशमे 10.9.3 _
क्षौमं वासः पृथुकटितटे बिभ्रती सूत्रनद्धं।
पुत्रस्नेहस्नुतकुचयुगं जातकम्पं च सुभ्रूः ॥१२॥

यथा वा _
डोरीजुटितवक्रकेशपटला सिन्दूरबिन्दूल्लसत्
सीमान्तद्युतिर् अङ्गभूषणविधिं नातिप्रभूतं श्रिता।
गोविन्दास्यनिसृष्टसाश्रुनयनद्वन्द्वा नवेन्दीवर
श्यामश्यामरुचिर् विचित्रसिचया गोष्ठेश्वरी पातु वः ॥१३॥

वात्सल्यम् यथा _
तनौ मन्त्रन्यासं प्रणयति हरेर् गद्गदमयी
सबाष्पाक्षी रक्षातिलकम् अलिके कल्पयति च।
स्नुवाना प्रत्यूषे दिशति च भुजे कार्मणम् असौ
यशोदा मूर्तेव स्फुरति सुतवात्सल्यपटली ॥१४॥

व्रजाधीशस्य रूपं यथा _
तिलतण्डुलितैः कचैः स्फुरन्तं
नवभाण्डीरपलाशचारुचेलम्।
अतितुन्दिलम् इन्दुकान्तिभाजं
व्रजराजं वरकूर्चम् अर्चयामि ॥१५॥

वात्सल्यम् यथा _
अवलम्ब्य कराङ्गुलिं निजां
स्खलदङ्घ्रि प्रसरन्तम् अङ्गने।
उरसि स्नवदश्रुनिर्झरो
मुमुदे प्रेक्ष्य सुतं व्रजाधिपः ॥१६॥

अथ उद्दीपनाः _
कौमारादिवयोरूपवेशाः शैशवचापलम्।
जल्पितस्मितलीलाद्याः बुधैर् उद्दीपनाः स्मृताः ॥१७॥

तत्र कौमारम् _
आद्यं मध्यं तथा शेषं कौमारं त्रिविधं मतम् ॥१८॥

तत्र आद्यम् _
स्थूलमध्योरुतापाङ्गश्वेतिमा स्वल्पदन्तता।
प्रव्यक्तमार्दवत्वं च कौमारे प्रथमे सति ॥१९॥

यथा _
त्रिचतुरदशनस्फुरन्मुखेन्दुं
पृथुतरमध्यकटिरकोरुसीमा।
नवकुवलयकोमलः कुमारो
मुदम् अधिकां व्रजनाथयोर् व्यतानीत् ॥२०॥

अस्मिन् मुहुः पदक्षेपक्षणिके रुदितस्मिते।
स्वाङ्गुष्ठपानम् उत्तानशयनाद्यं च चेष्टितम् ॥२१॥

मुखपुटकृतपादाम्भोरुहाङ्गुष्ठमूर्ध
प्रचलचरणयुग्मं पुत्रम् उत्तानसुप्तम्।
क्षणम् इह विरुदन्तं स्मेरवक्त्रं क्षणं सा
तिलम् अपि विरतासीन् नेक्षितुं गोष्ठराज्ञी ॥२२॥

अत्र व्याघ्रनखं कण्ठे रक्षातिलकमङ्गलम्।
पङ्कडोरी कटौ हस्ते सूत्रम् इत्य् आदि मण्डनम् ॥२३॥

यथा _
तरक्षुनखमण्डलं नवतमालपत्रद्युतिं
शिशुं रुचिररोचनाकृततमालपत्रश्रियम्।
धृतप्रतिसरं कटिस्फुरितपङ्कसूत्रस्रजं
व्रजेशगृहिणी सुतं न किल वीक्ष्य तृप्तिं ययौ ॥२४॥

अथ मध्यमम् _
दृक्तटीभागलकतानग्नता च्छिद्रिकर्णता।
कलोक्तिरिङ्गनाद्यं च कौमारे सति मध्यमे ॥२५॥

यथा _
विचलदलकरुद्धभ्रूकुटी चञ्चलाक्षं
कलवचनम् उदञ्चन् नूतनश्रोत्ररन्ध्रम्।
अलघुरचितरिङ्गं गोकुले दिग्दुकूलं
तनयम् अमृतसिन्धौ प्रेक्ष्य माता न्यमाङ्क्षीत् ॥२६॥

घ्राणस्य शिखरे मुक्ता नवनीतं कराम्बुजे।
किङ्किण्यादि च कट्यादौ प्रसाधनम् इहोदितम् ॥२७॥

यथा _
क्वणितकनककिङ्किणीकलापं

स्मितमुखम् उज्ज्वलनासिकाग्रम् उक्तम् ।
करधृतनवनीतपिण्डम् अग्रे
तनयम् अवेक्ष्य ननन्द नन्दपत्नी ॥२८ ॥

अथ शेषम् _
अत्र किञ्चित् कृशं मध्यम् ईषत्प्रथिमभाग् उरः ।
शिरश् च काकपक्षाढ्यं कौमारे चरमे सति ॥२९ ॥

यथा _
स मनाग् अपचीयमानमध्यः
प्रथिमोपक्रमशिक्षणार्थिवक्षाः ।
दधदाकुलकाकपक्षलक्ष्मीं
जननीं स्तम्भयति स्म दिव्यडिम्भः ॥३० ॥

धटी फणपडी चात्र किञ्चिद्वन्यविभूषणम् ।
लघुवेत्रकरत्वादि मण्डनं परिकीर्तितम् ॥३१ ॥
वत्सरक्षा व्रजाभ्यर्णे वयस्यैः सह खेलनम् ।
पावशृङ्गदलादीनां वादनाद्य् अत्र चेष्टितम् ॥३२ ॥

यथा _
शिखण्डकृतशेखरः फणपटीं दधत्
करे च लगुडीं लघुं सवयसां कुलैर् आवृतः ।
अवन्न् इह शकृत्करीन् परिसरे व्रजस्य प्रिये
सुतस् तव कृतार्थयत्य् अहह पश्य नेत्राणि नः ॥३३ ॥

अथ पौगण्डम् _
पौगण्डादि पुरैवोक्तं तेन सङ्क्षिप्य लिख्यते ॥३४ ॥

यथा __
पथि पथि सुरभीणान् अंशुकोत्तंसिमूर्धा
धवलिम् अयुगपाङ्गो मण्डितः कञ्चुकेन ।
लघु लघु परिगुञ्जन्मञ्जुमञ्जीरयुग्मं
व्रजभुवि मम वत्सः कच्चदेशाद् उपैति ॥३५ ॥

अथ कैशोरम् _
अरुणिमयुगपाङ्गस् तुङ्गवक्षःकपाटी
विलुठदमलहारो रम्यरोमावलिश्रीः ।
पुरुषमणिर् अयं मे देवकि श्यामलाङ्गस्
त्वदुदरखनिजन्मा नेत्रम् उच्चैर् धिनोति ॥३६ ॥

नव्येन यौवनेनापि दीव्यन् गोष्ठेन्द्रनन्दनः ।
भाति केवलवात्सल्यभाजां पौगण्डभाग् इव ॥३७ ॥
सुकुमारेण पौगण्डवयसा सङ्गतोऽप्य् असौ ।
किशोराभः सदा दासविशेषाणां प्रभासते ॥३८ ॥

अथ शैशवचापलम् _
पारीर् भिनत्ति विकिरत्य् अजिरे दधीनि
सन्तानिकां हरति कृन्तति मन्थदण्डम् ।
वह्नौ क्षिपत्य् अविरतं नवनीतम् इत्थं
मातुः प्रमोदभरम् एव हरिस् तनोति ॥३९ ॥

यथा वा _
प्रेक्ष्य प्रेक्ष्य दिशः सशङ्कम् असकृन् मन्दं पदं निक्षिपन्
नायात्य् एष लतान्तरे स्फुटम् इतो गव्यं हरिष्यन् हरिः ।
तिष्ठ स्वैरम् अजानतीव मुखरे चौर्यभ्रमद्भ्रूलतं
त्रस्यल्लोचनम् अस्य शुष्यदधरं रम्यं दिदृक्षे मुखम् ॥४० ॥

अथ अनुभावाः _
अनुभावाः शिरोघ्राणं करेणाङ्गाभिमार्जनम् ।
आशीर्वादो निदेशश् च लालनं प्रतिपालनम् ।
हितोपदेशदानाद्या वत्सले परिकीर्तिताः ॥४१ ॥

अत्र शिरोघ्राणम् यथा श्रीदशमे 10.13.33 __
तदीक्षणोत्प्रेमरसाप्लुताशया
जातानुरागा गतमन्यवो ऽर्भकान् ।
उदुह्य दोर्भिः परिरभ्य मूर्धनि
घ्राणैर् अवापुः परमां मुदं ते ॥४२ ॥

यथा वा _
दुग्धेन दिग्धा कुचविच्युतेन
समग्रम् आघ्राय शिरः सपिच्छम् ।
करेण गोष्ठेशितुर् अङ्गनेयम्
अङ्गानि पुत्रस्य मुहुर् ममार्ज ॥४३ ॥

चुम्बाश्लेषौ तथाह्वानं नामग्रहणपूर्वकम् ।
उपालम्भादयश् चात्र मित्रैः साधारणाः क्रियाः ॥४४ ॥

अथ सात्त्विकाः _
नवात्र सात्त्विकाः स्तन्यस्रावः स्तम्भादयश् च ते ॥४५ ॥

तत्र स्तन्यस्रावो यथा श्रीदशमे 10.13.22 __
तन्मातरो वेणुरवत्वरोत्थिता
उत्थाप्य दोर्भिः परिरभ्य निर्भरम् ।
स्नेहस्नुतस्तन्यपयःसुधासवं
मत्वा परं ब्रह्म सुतान् अपाययन् ॥४६ ॥

यथा वा ललितमाधवे 1.46 _
निचुलितगिरिधातुस्फीतपत्रावलीकान्
अखिलसुरभिरेणून् क्षालयद्भिर् यशोदा ।
कुचकलसविमुक्तैः स्नेहमाध्वीकमध्यैस्
तव नवम् अभिषेकं दुग्धपूरैः करोति ॥४७ ॥

स्तम्भादयो यथा _
कथम् अपि परिरब्धुं न क्षमा स्तब्धगात्री
कलयितुम् अपि नालं बाष्पपुरप्लुताक्षी ।
न च सुतम् उपदेष्टुं रुद्धकण्ठी समर्था
दधतम् अचलम् आसीद् व्याकुला गोकुलेशा ॥४८ ॥

अथ व्यभिचारिणः __
तत्रापस्मारसहिताः प्रीतोक्ताः व्यभिचारिणः ॥४९ ॥

तत्र हर्षो यथा श्रीदशमे 10.17.19 _
यशोदापि महाभागा नष्टलब्धप्रजा सती ।
परिष्वजाङ्कम् आरोप्य मुमोचाश्रुकलां मुहुः ॥५० ॥

यथा वा विदग्धमाधवे 1.20 _
जितचन्द्रपरागचन्द्रिका
नलदेन्दीवरचन्दनश्रियम् ।
परितो मयि शैत्यमाधुरीं
वहति स्पर्शमहोत्सवस् तव ॥५१ ॥

अथ स्थायी _
सम्भ्रमादिच्युता या स्याद् अनुकम्पेऽनुकम्पितुः ।
रतिः सैवात्र वात्सल्यं स्थायी भावो निगद्यते ॥५२ ॥
यशोदादेस् तु वात्सल्यरतिः प्रौढा निसर्गतः ।
प्रेमवत् स्नेहवद् भाति कदाचित् किल रागवत् ॥५३ ॥

तत्र वात्सल्यरतिर् यथा श्रीदशमे 10.6.43
नन्दः स्वपुत्रम् आदाय प्रेत्यागतम् उदारधीः ।
मूर्ध्न्य् उपाघ्राय परमां मुदं लेभे कुरूद्वह ॥५४ ॥

यथा वा __
विन्यस्तश्रुतिपालिर् अद्य मुरलीनिस्वानशुश्रूषा
भूयः प्रस्रववर्षिणी द्विगुणितोत्कण्ठा प्रदोषोदये ।
गेहाद् अङ्गनम् अङ्गनात् पुनर् असौ गेहं विशन्त्य् आकुला
गोविन्दस्य मुहुर् व्रजेन्द्रगृहिणी पन्थानम् आलोकते ॥५५ ॥

प्रेमवद् यथा _
प्रेक्ष्य तत्र मुनिराजमण्डलैः
स्तूयमानम् असि मुक्तसम्भ्रमा ।
कृष्णम् अङ्कम् अभि गोकुलेश्वरी
प्रस्नुता कुरुभुवि न्यवीविशत् ॥५६ ॥

यथा वा __
देवक्या विवृतप्रसूचरितयाप्य् उन्मृज्यमानानने
भूयोभिर् वसुदेवनन्दनतयाप्य् उद्घूष्यमाणे जनैः ।
गोविन्दे मिहिरग्रहोत्सुकतया क्षेत्रं कुरोर् आगते
प्रेमा वल्लवनाथयोर् अतितराम् उल्लासम् एवाययौ ॥५७ ॥

स्नेहवत् यथा _
पीयूषद्युतिभिः स्तनाद्रिपतितैः क्षीरोत्करैर् जाह्नवी
कालिन्दी च विलोचनाब्जजनितैर् जाताञ्जनश्यामलैः ।
आरान्मध्यमवेदिम् आपतितयोः क्लिन्ना तयोः सङ्गमे
वृत्तासि व्रजराज्ञि तत्सुतमुखप्रेक्षां स्फुटं वाञ्छसि ॥५८ ॥

रागवत् यथा _
तुषावति तुषानलोऽप्य् उपरि तस्य बद्धस्थितिर्
भवन्तम् अवलोकते यदि मुकुन्द गोष्ठेश्वरी ।
सुधाम्बुधिर् अपि स्फुटं विकटकालकूटत्य् अलं
स्थिता यदि न तत्र ते वदनपद्मम् उद्वीक्ष्यते ॥५९ ॥

अथ अयोगे उत्कण्ठितम् यथा _
वत्सस्य हन्त शरदिन्दुविनिन्दिवक्त्रं
सम्पादयिष्यति कदा नयनोत्सवं नः ।
इत्य् अच्युते विहरति व्रजबाटिकायाम्
ऊर्वी त्वरा जयति देवकनन्दिनीनाम् ॥६० ॥

यथा वा __
भ्रातस् तनयं भ्रातुर्
मम सन्दिश गान्दिनीपुत्र ।

भ्रातृव्येषु वसन्ती
दिदृक्षते त्वां हरे कुन्ती ॥६१॥

वियोगो यथा श्रीदशमे 10.46.28 _
यशोदा वर्ण्यमानानि पुत्रस्य चरितानि च ।
शृण्वत्य् अश्रूण्य् अस्राक्षीत् स्नेहस्नुतपयोधरा ॥६२॥

यथा वा _
याते राजपुरं हरौ मुखतटी व्याकीर्णधूम्रालका
पश्य स्रस्ततनुः कठोरलुठनैर् देहे व्रणं कुर्वती ।
क्षीणा गोष्ठमहीमहेन्द्रमहिषी हा पुत्र पुत्रेत्य् असौ
क्रोशन्ती करयोर् युगेन कुरुते कष्टाद् उरस्ताडनम् ॥६३॥

बहूनाम् अपि सद्भावे वियोगेऽत्र तु केचन ।
चिन्ता विषादनिर्वेदजाड्यदैन्यानि चापलम् ।
उन्मादमोहाव् इत्य् आद्या अत्युद्रेकं व्रजन्त्य् अमी ॥६४॥

अत्र चिन्ता _
मन्दस्पन्दम् अभूत् क्लमैर् अलघुभिः सन्दानितं मानसं
द्वन्द्वं लोचनयोश् चिराद् अविचलव्याभुग्नतारं स्थितम् ।
निश्वासैः स्रवद् एव पाकम् अयते स्तन्यं च तप्तैर् इदं
नूनं वल्लवराज्ञि पुत्रविरहोद्घूर्णाभिर् आक्रम्यसे ॥६५॥

विषादः _
वदनकमलं पुत्रस्याहं निमीलति शैशवे
नवतरुणिमारम्भोन्मृष्टं न रम्यम् अलोकयम् ।
अभिनववधूयुक्तं चामुं न हर्म्यम् अवेशयं
शिरसि कुलिशं हन्त क्षिप्तं श्वफल्कसुतेन मे ॥६६॥

निर्वेदः _
धिग् अस्तु हतजीवितं निरवधिश्रियोऽप्य् अद्य मे
यया न हि हरेः शिरः स्नुतकुचाग्रम् आघ्रायते ।
सदा नवसुधादुहाम् अपि गवां परार्धं च धिक्
स लुञ्चति न चञ्चलः सुरभिगन्धि यासां दधि ॥६७॥

जाड्यम् _
यः पुण्डरीकेक्षण तिष्ठतस् ते
गोष्ठे कराम्भोरुहमण्डनोऽभूत् ।
तं प्रेक्ष्य दण्डस्तिमितेन्द्रियाद् यद्
दण्डाकृतिस् ते जननी बभूव ॥६८॥

दैन्यम् _
याचते बत विधातर् उदस्रा त्वां रदैस् तृणम् उदस्य यशोदा ।
गोचरे सकृद् अपि क्षणम् अद्य मत्सरं त्यज ममानय वत्सम् ॥६९॥

चापलम् _
किम् इव कुरुते हर्म्ये तिष्ठन्न् अयं निरपत्रपो
व्रजपतिर् इति ब्रूते मुग्धोऽयम् अत्र मुदा जनः ।
अहह तनयं प्राणेभ्योऽपि प्रियं परिहृत्य तं
कठिनहृदयो गोष्ठे स्वैरी प्रविश्य सुखीयति ॥७०॥

उन्मादः _
क्व मे पुत्रो नीपाः कथयत कुरङ्गाः किम् इह वः
स बभ्रामाभ्यर्णे भणत तम् उदन्तं मधुकराः ।
इति भ्रामं भ्रामं भ्रमभरविदूना यदुपते
भवन्तं पृच्छन्ती दिशि दिशि यशोदा विचरति ॥७१॥

मोहः _
कुटुम्बिनि मनस् तटे विधुरतां विधत्से कथं
प्रसारय दृशं मनाक् तव सुतः पुरो वर्तते ।
इदं गृहिणि गृहं न कुरु शून्यम् इत्य् आकुलं
स शोचति तव प्रसूं यदुकुलेन्द्र नन्दः पिता ॥७२॥

अथ योगे सिद्धिः _
विलोक्य रङ्गस्थललब्धसङ्गमं
विलोचनाभीष्टविलोकनं हरिम् ।
स्तन्यैर् असिञ्चन् नवकञ्चुकाञ्चलं
देव्यः क्षणाद् आनकदुन्दुभिप्रियाः ॥७३॥

तुष्टिर् यथा प्रथमे 1.11.30 _
ताः पुत्रम् अङ्कम् आरोप्य स्नेहस्नुतपयोधराः ।
हर्षविह्वलितात्मानः सिषिचुर् नेत्रजैर् जलैः ॥७४॥

यथा वा ललितमाधवे 10.14 __
नयनयोः स्तनयोर् अपि युग्मतः
परिपतद्भिर् असौ पयसां झरैः ।
अहह वल्लवराजगृहेश्वरी
स्वतनयं प्रणयाद् अभिषिञ्चति ॥७५॥

स्थितिर् यथा विदग्धमाधवे 1.19 __

अहह कमलगन्धेर् अत्र सौन्दर्यवृन्दे
विनिहितनयनेयं त्वन्मुखेन्दोर् मुकुन्द ।
कुचकलसमुखाभ्याम् अम्बरक्नोपम् अम्बा
तव मुहुर् अतिहर्षाद् वर्षति क्षीरधाराम् ॥७६ ॥

स्वीकुर्वते रसम् इमं नाट्यज्ञा अपि केचन ॥७७ ॥

तथाहुः षाह्ड् ३।२०१ _
स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।
स्थायी वत्सलतास्येह पुत्राद्यालम्बनं मतम् ॥७८ ॥

किं च _
अप्रतीतौ हरिरतेः प्रीतस्य स्याद् अपुष्टता ।
प्रेयसस् तु तिरोभावो वत्सलय्सास्य न क्षतिः ॥७९ ॥
एषा रसत्रयी प्रोक्ता प्रीतादिः परमाद्भुता ।
तत्र केषुचिद् अप्य् अस्याः सङ्कुलत्वम् उदीर्यते ॥८० ॥
सङ्कर्षणस्य सख्यस् तु प्रीतिवात्सल्यसङ्गतम् ।
युधिष्ठिरस्य वात्सल्यं प्रीत्या सख्येन चान्वितम् ॥८१ ॥
आहुकप्रभृतीनां तु प्रीतिर् वात्सल्यमिश्रिता ।
जरदाभीरिकादीनां वात्सल्यं सख्यमिश्रितम् ॥८२ ॥
माद्रेयनारदादीनां सख्यं प्रीत्या करम्बितम् ।
रुद्रताक्ष्योद्धवादीनां प्रीतिः सख्येन मिश्रिता ॥८३ ॥
अनिरुद्धापिनत्तृणाम् एवं केचिद् बभाषिरे ।
एवं केषुचिद् अन्येषु विज्ञेयं भावमिश्रणम् ॥८४ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पश्चिमविभागे मुख्यभक्तिरसपञ्चकनिरूपणे
वत्सलभक्तिरसलहरी चतुर्थी ।

३।५
मधुरभक्तिरसाख्या पञ्चमलहरी

आत्मोचितैर् विभावाद्यैः पुष्टिं नीता सतां हृदि ।
मधुराख्यो भवेद् भक्तिरसो ऽसौ मधुरा रतिः ॥१ ॥
निवृत्तानुपयोगित्वाद् दुरूहत्वाद् अयं रसः ।
रहस्यत्वाच् च संक्षिप्य विततााण्गो विलिख्यते ॥ २ ॥

तत्र आलम्बनाः __
अस्मिन् आलम्बनः कृष्णः प्रियास् तस्य तु सुभ्रुवः ॥३ ॥

तत्र कृष्णः __
तत्र कृष्णः असमानोर्ध्वसौन्दर्यलीलावैदिग्धीसम्पदाम् ।
आश्रयत्वेन मधुरे हरिर् आलम्बनो मतः ॥४ ॥

यथा श्रीगीतगोविन्दे 1.11 _
विश्वेषाम् अनुरञ्जनेन जनयन्न् आनन्दम् इन्दीवर
श्रेणीश्यामलकोमलैर् उपनयन्न् अङ्गैर् अनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिर् अभितः प्रत्यङ्गम् आलिङ्गितः
शृङ्गारः सखि मूर्तिमान् इव मधौ मुग्धो हरिः क्रीडति ॥५ ॥

अथ तस्य प्रेयस्यः _
नवनववरमाधुरीधुरीणाः
प्रणयतरङ्गकरम्बितास् तरङ्गाः ।
निजरमणतया हरिं भजन्तिः
प्रणमत ताः परमाद्भुताः किशोरीः ॥६ ॥

प्रेयसीषु हरेर् आसु प्रवरा वार्षभानवी ॥७ ॥

अस्या रूपं _
मदचकितचकोरीचारुताचोरदृष्टिर्
वदनदमितराकारोहिणीकान्तकीर्तिः ।
अविकलकलधौतोद्धूतिधौरेयकश्रीर्
मधुरिममधुपात्री राजते पश्य राधा ॥८ ॥

अस्या रतिः __
नर्मोक्तौ मम निर्मितोरुपरमानन्दोत्सवायाम् अपि
श्रोत्रस्यान्ततटीम् अपि स्फुटम् अनाधाय स्थितोद्यन्मुखी ।
राधा लाघवम् अप्य् अनादरगिरां भङ्गीभिर् आतन्वती
मैत्रीगौरवतोऽप्य् असौ शतगुणां मत्प्रीतिम् एवादधे ॥९ ॥

तत्र कृष्णरति~ यथा श्रीगीतगोविन्दे 3.1 _
कंसारिर् अपि संसारवासनाबद्धशृङ्खलाम् ।
राधाम् आधाय हृदये तत्याज व्रजसुन्दरीः ॥१० ॥

अथ उद्दीपनाः ।
उद्दीपना इह प्रोक्ता मुरलीनिस्वनादयः ॥११ ॥

यथा पद्यावल्याम् 172१६
गुरुजनगञ्जनम् अयशो
गृहपतिचरितं च दारुणं किम् अपि ।

विस्मारयति समस्तं
शिव शिव मुरली मुरारातेः ॥१२॥

अथ अनुभावाः _
अनुभावास् तु कथिता दृग्नतेक्षास्मितादयः ॥१३॥

यथा ललितमाधवे 1.14 _
कृष्णापङ्गतरङ्गितद्युमणिजासम्भेदवेणीकृते
राधायाः स्मितचन्द्रिकासुरधुनीपुरे निपीयामृतम्।
अन्तस् तोषतुषारसम्प्लवलवव्यालीढतापोद्गमाः
क्रान्त्वा सप्त जगन्ति सम्प्रति वयं सर्वोर्ध्वम् अध्यास्महे ॥१४॥

अथ सात्त्विकाः यथा पद्यावल्याम् 181 __
कामं वपुः पुलकितं नयने धृतास्रे
वाचः सगद्गदपदाः सखि कम्पि वक्षः।
ज्ञातं मुकुन्दमुरलीरवमाधुरी ते
चेतः सुधांशुवदने तरलीकरोति ॥१५॥

अथ व्यभिचारिणः _
आलस्यौग्र्ये विना सर्वे विज्ञेया व्यभिचारिणः ॥१६॥

तत्र निर्वेदो यथा पद्यावल्याम् 221 __
मा मुञ्च पञ्चशर पञ्चशरीं शरीरे
मा सिञ्च सान्द्रमकरन्दरसेन वायो।
अङ्गानि तत्प्रणयभङ्गविगर्हितानि
नालम्बितुं कथम् अपि क्षमतेऽद्य जीवः ॥१७॥

हर्षो यथा दानकेलिकौमुद्याम् 34 __
कुवलययुवतीनां लेहयन्न् अक्षिभृङ्गैः
कुवलयदललक्ष्मीलङ्घिमाः स्वाङ्गभासः।
मदकलकलभेन्द्रोल्लङ्घिलीलातरङ्गः
कवलयति धृतिं मे क्ष्माधरारण्यधूर्तः ॥१८॥

अथ स्थायी __
स्थायी भावो भवत्य् अत्र पूर्वोक्ता मधुरा रतिः ॥१९॥

यथा पद्यावल्याम् 158 __
भ्रूवल्लिताण्डवकलामधुराननश्रीः
कङ्केल्लिकोरककरम्बितकर्णपूरः।
कोऽयं नवीननिकषोपलतुल्यवेषो
वंशीरवेण सखि माम् अवशीकरोति ॥२०॥

राधामाधवयोर् एव क्वापि भावैः कदाप्य् असौ।
सजातीयविजातीयैर् नैव विच्छिद्यते रतिः ॥२१॥

यथा _
इतो दूरे राज्ञी स्फुरति परितो मित्रपटली
दृशोर् अग्रे चन्द्रावलिर् उपरि शैलस्य दनुजः।
असव्ये राधायाः कुसुमितलता संवृततनौ दृग्
अन्तश्रीर् लोला तडिद् इव मुकुन्दस्य वलते ॥२२॥

घोरा खण्डितशङ्खचूडम् अजिरं रुन्धे शिवा तामसी
ब्रह्मिष्ठश्वसनः शमस्तुतिकथा प्रालेयम् आसिञ्चति।
अग्रे रामः सुधारुचिर् विजयते कृष्णप्रमोदोचितं
राधायास् तद् अपि प्रफुल्लम् अभजन् म्लानिं न भावाम्बुजम् ॥२३॥

स विप्रलम्भसम्भोगभेदेन द्विविधो मतः ॥२४॥

तत्र विप्रलम्भः _
स पूर्वरागो मानश् च प्रवासादिमयस् तथा।
विप्रलम्भो बहुविधो विद्वद्भिर् इह कथ्यते ॥२५॥

तत्र पूर्वरागः _
प्रागसङ्गतयोर् भावः पूर्वरागो भवेद् द्वयोः ॥२६॥

यथा पद्यावल्याम् 181 _
अकस्माद् एकस्मिन् पथि सखि मया यामुनतटं
व्रजन्त्या दृष्टो यो नवजलधरश्यामलतनुः।
स दृग्भङ्ग्या किं वाकुरुत न हि जाने तत इदं
मनो मे व्यालोलं क्वचन गृहकृत्यो न लगते ॥२७॥

यथा श्रीदशमे 10.53.2 _
यथा विनिद्रा यच् चित्ता रुक्मिणी कमलेक्षणा।
तथाहम् अपि तच्चित्तो निद्रां च न लभे निशि।
वेदाहं रुक्मिण्या द्वेषान् ममोद्वाहो निवारितः ॥२८॥

अथ मानः।
मानः प्रसिद्ध एवात्र ॥२९॥

यथा श्रीगीतगोविन्दे 2.1 _

विहरति वने राधा साधारणप्रणये हरौ
विगलितनिजोत्कर्षाद् ईर्ष्यावशेन गतान्यतः ।
क्वचिद् अपि लताकुञ्जे गुञ्जन्मधुव्रतमण्डली
मुखरनिखरे लीना दीनाप्य् उवाच रहः सखीम् ॥३० ॥

अथ प्रवासः
प्रवासः सङ्गविच्युतिः ॥३१ ॥

यथा पद्यावल्याम् 350 _
हस्तोदरे विनिहितैककपोलपालेर्
अश्रान्तलोचनजलस्नपिताननायाः ।
प्रस्थानमङ्गलदिनावधि माधवस्य
निद्रालवोऽपि कुत एव सरोरुहाक्ष्याः ॥३२ ॥

यथा प्रह्लादसंहितायाम् उद्धववाक्यम् _
भगवान् अपि गोविन्दः कन्दर्पशरपीडितः ।
न भुङ्क्ते न स्वपिति च चिन्तयन् वो ह्य् अहर्निशम् ॥३३ ॥

अथ सम्भोगः _
द्वयोर् मिलितयोर् भोगः सम्भोग इति कीर्त्यते ॥३४ ॥

यथा पद्यावल्याम् 199 __
परमानुरागपरयाथ राधया
परिरम्भकौशलविकाशिभावया ।
स तया सह स्मरसभाजनोत्सवं
निरवाहयच् छिखिशिखण्डशेखरः ॥३५ ॥

श्रीमद्भागवताद्यर्हशास्त्रदर्शितया दृशा ।
इयम् आविष्कृता मुख्यपञ्चभक्तिरसा मया ॥३६ ॥
गोपालरूपशोभां दधद् अपि रघुनाथभावविस्तारी ।
तुष्यतु सनातनात्मा पश्चिमभागे रसाम्बुनिधेः ॥३७ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ
पश्चिमविभागे मधुराख्यभक्तिरसलहरी चतुर्थी ।

इति श्रीश्रीभक्तिरसामृतसिन्धौ
मुख्यभक्तिरसनिरूपकः पश्चिमविभागः समाप्तः ।

उत्तरविभागः
४ ।१

हास्यभक्तिरसाख्या प्रथमलहरी

भक्तिभरेण प्रीतिं कलयन्न् उररीकृतव्रजासङ्गः ।
तनुतां सनातनात्मा भगवान् मयि सर्वदा तुष्टिम् ॥१ ॥
रसामृताब्धेर् भागेऽत्र तुरीये तूत्तराभिधे ।
रसः सप्तविधो गौणो मैत्रीवैरस्थितिर् मिथः ॥२ ॥
रसाभासाश् च तेनात्र लहर्यो नव कीर्तिताः ।
प्राग् अत्रानियताधाराः कदाचित् क्वाप्य् उदित्वराः ॥३ ॥
गौणा भक्तिरसाः सप्त लेख्या हास्यादयः क्रमात् ॥४ ॥
भक्तानां पञ्चधोक्तानाम् एषां मध्यत एव हि ।
क्वाप्य् एकः क्वाप्य् अनेकश् च गौणेष्व् आलम्बनो मतः ॥५ ॥

तत्र हास्यभक्तिरसः __
वक्ष्यमाणैर् विभावाद्यैः पुष्टिं हासरतिर् गता ।
हास्यभक्तिरसो नाम बुधैर् एष निगद्यते ॥६ ॥
अस्मिन्न् आलम्बनः कृष्णस् तथान्योऽपि तदन्वयी ।
वृद्धाः शिशुमुखाः प्रायः प्रोक्ता धीरैस् तदाश्रयाः ।
विभावनादिवैशिष्ठ्यात् प्रवराश् च क्वचिन् मताः ॥७ ॥

तत्र कृष्णो यथा _
यास्याम्य् अस्य न भीषणस्य सविधं जीर्णस्य शीर्णाकृतेर्
मातर् नेष्यति मां पिधाय कपटाद् आधारिकायाम् असौ ।
इत्य् उक्त्वा चकिताक्षम् अद्भुतशिशाव् उद्वीक्ष्यमाणे हरौ
हास्यं तस्य निरुद्धतोऽप्य् अतितरां व्यक्तं तदासीन् मुनेः ॥८ ॥

अथ तदन्वयी _
यच् चेष्टा कृष्णविषया प्रोक्तः सोऽत्र तदन्वयी ॥९ ॥

यथा _
ददामि दधिफाणितं विवृणु वक्त्रम् इत्य् अग्रतो
निशम्य जरतीगिरं विवृतकोमलौष्ठे स्थिते ।
तया कुसुमम् अर्पितं नवम् अवेत्य भुग्नानने
हरौ जहसुर् उद्धुरं किम् अपि सुष्ठु गोष्ठार्भकाः ॥१० ॥

यथा वा _
अस्य प्रेक्ष्य करं शिशोर् मुनिपते श्यामस्य मे कथ्यतां
तथ्यं हन्त चिरायुर् एष भविता किं धेनुकोटीश्वरः ।
इत्य् उक्ते भगवन् मयाद्य परितश् चीरेण किं चारुणा
द्राग् आविर्भवदुद्धुरस्मितम् इदं वक्त्रं त्वया रुध्यते ॥११ ॥

उद्दीपना हरेस् ताद्दग्वाग्वेषचरितादयः।
अनुभावास् तु नासौष्ठगण्डनिष्पन्दनादयः ॥१२॥
हर्षालस्यावहित्थाद्या विज्ञेया व्यभिचारिणः।
सा हासरतिर् एवात्र स्थायिभावतयोदिता ॥१३॥
षोढा हासरतिः स्यात् स्मितहसिते विहसितावहसिते च।
अपहसितातिहसितके ज्येष्ठादीनां क्रमाद् द्वे द्वे ॥१४॥
विभावनादिवैचित्र्याद् उत्तमस्यापि कुत्रचित्।
भवेद् विहसिताद्यं च भावज्ञैर् इति भण्यते ॥१५॥

तत्र चित्रम् _
स्मितं त्व् अलक्ष्यदशनं नेत्रगण्डविकाशकृत् ॥१६॥

यथा _
क्व यामि जरती खला दधिहरं दिधीर्षन्त्य् असौ
प्रधावति जवेन मां सुबल मङ्क्षु रक्षां कुरु।
इति स्खलदुदीरिते द्रवति कान्दिशीके हरौ
विकस्वरमुखाम्बुजं कुलम् अभून् मुनीनां दिवि ॥१७॥

हसितम् _
तद् एव दरसंलक्ष्यदन्ताग्रं हसितं भवेत् ॥१८॥

यथा _
मद्वशेन पुरःस्थितो हरिर् असौ पुत्रोऽहम् एवास्मि ते
पश्येत्य् अच्युतजल्पविश्वसितया संरम्भरज्यद्दृशा।
माम् एति स्खलदक्षरे जटिलया व्याक्रुश्य निष्कासिते
पुत्रे प्राङ्गतः सखीकुलम् अभूद् दन्तांशुधौताधरम् ॥१९॥

विहसितम् _
सस्वनं दृष्टदशनं भवेद् विहसितं तु तत् ॥२०॥

यथा _
मुषाण दधि मेदुरं विफलम् अन्तरा शङ्कसे
सनिःश्वसितडम्बरं जटिलयात्र निद्रायते।
इति ब्रुवति केशवे प्रकटशीर्णदन्तस्थलं
कृतं हसितम् उत्स्वनं कपटसुप्तया वृद्धया ॥२१॥

अवहसितम् _
तच् चावहसितं फुल्लनासं कुञ्चितलोचनम् ॥२२॥

यथा _
लग्नस् ते नितरां दृशोर् अपि युगे किं धातुरागो घनः
प्रातः पुत्र बलस्य वा किम् असितं वासस् त्वयाङ्गे धृतम्।
इत्य् आकर्ण्य पुरो व्रजेशगृहिणीवाचं स्फुरन्नासिका
दूती सङ्कुचदीक्षणावहसितं जाता न रोद्धुं क्षमा ॥२३॥

अपहसितम् _
तच् चापहसितं साश्रुलोचनं कम्पितांसकम् ॥२४॥

यथा _
उदस्रं देवर्षिर् दिवि दरतरङ्गद्भुजशिरा
यद् अभ्राण्य् उद्दण्डो दशनरुचिभिः पाण्डरयति।
स्फुटं ब्रह्मादीनां नटयितरि दिव्ये व्रजशिशौ
जरत्याः प्रस्तोभान् नटति तद् अनैषीद् दृशम् असौ ॥२५॥

अतिहसितम् _
सहस्रतालं क्षिप्ताङ्गं तच् चातिहसितं विदुः ॥२६॥

यथा _
वृद्धे त्वं वलितानानासि वलिभिः प्रेक्ष्य सुयोग्याम् अतस्
त्वाम् उद्वोढुम् असौ बलीमुखवरो मां साधयत्य् उत्सुकः।
आभिर् विप्लुतधीर् वृणे न हि परं त्वत्तो बलिध्वंसनाद्
इत्य् उच्चैर् मुखरागिरा विजहसुः सोत्तालिका बालिकाः ॥२७॥

यस्य हासः स चेत् क्वापि साक्षान् नैव निबध्यते।
तथाप्य् एष विभावादिसामर्थ्याद् उपलभ्यते ॥२८॥

यथा _
शिम्बीलम्बिकुचासि दर्दुरवधूविस्पर्धि नासाकृतिस्
त्वं जीर्यद्बुलिदृष्टिर् ओष्ठतुलिताङ्गारा मृदङ्गोदरी।
का त्वत्तः कुटिले परास्ति जटिलापुत्रि क्षितौ सुन्दरी
पुण्येन व्रजसुभ्रुवां तव धृतिं हर्तुं न वंशी क्षमा ॥२९॥

एष हास्यरसस् तत्र कैशिकीवृत्तिविस्तृतौ।
शृङ्गारादिरसोद्भेदो बहुधैव प्रपञ्चितः ॥३०॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
हास्यभक्तिरसनिरूपणे अद्भुतभक्तिरसलहरी प्रथमा ॥
४।२
अद्भुतभक्तिरसाख्या द्वितीयलहरी

आत्मोचितैर् विभावाद्यैः स्वाद्यत्वं भक्तचेतसि ।
सा विस्मयरतिर् नीताद् भुतोभक्तिरसो भवेत् ॥१॥
भक्तः सर्वविधोऽप्य् अत्र घटते विस्मयाश्रयः ।
लोकोत्तरक्रियाहेतुर् विषयस् तत्र केशवः ॥२॥
तस्य चेष्टाविशेषाद्यास् तस्मिन्न् उद्दीपना मताः ।
क्रियास् तु नेत्रविस्तारस्तम्भाश्रुपुलकादयः ॥३॥
आवेगहर्षजाड्याद्यास् तत्र स्युर् व्यभिचारिणः ।
स्थायी स्याद् विस्मयरतिः सा लोकोत्तरकर्मतः ।
साक्षाद् अनुमितं चेति तच् च द्विविधम् उच्यते ॥४॥

तत्र साक्षात यथा _
साक्षाद् ऐन्द्रियकं दृष्टश्रुतसङ्कीर्तितादिकम् ॥५॥

तत्र दृष्टं यथा _
एकम् एव विविधोद्यमभाजं
मन्दिरेषु युगपन् निखिलेषु ।
द्वारकाम् अभि समीक्स्य मुकुन्दं
स्पन्दनोज्झिततनुर् मुनिर् आसीत् ॥६॥

यथोक्तं श्रीदशमे 10.69.2 _
चित्रं बतैतद् एकेन वपुषा युगपत् पृथक् ।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत् ॥७॥

यथा वा _
क्व स्तन्यगन्धिवदनेन्दुर् असौ शिशुस् ते
गोवर्धनः शिखररुद्धघनः क्व चायम् ।
भोः पश्य सव्यकरकन्दूकिताचलेन्द्रः
खेलन्न् इव स्फुरति हन्त किम् इन्द्रजालम् ॥८॥

श्रुतं यथा _
यान्य् अक्षिपन् प्रहरणानि भटाः स देवः
प्रत्येकम् अच्छिनदमुनि शरत्रयेण ।
इत्य् आकलय्य युधि कंसरिपोः प्रभावं
स्फारेक्षणः क्षितिपतिः पुलकी तदासीत् ॥९॥

सङ्कीर्तितं यथा _
डिम्बाः स्वर्णनिभाम्बरा घनरुचो जाताश् चतुर्बाहवो
वत्साश् चेति वदन् कृतोऽस्मि विवशः स्तम्भश्रिया पश्यत ।
आश्चर्यं कथयामि वः शृणुत भोः प्रत्येकम् एकैकशः
स्तूयन्ते जगदण्डवद्भिर् अभितस् ते हन्त पद्मासनैः ॥१०॥

अनुमितं यथा _
उन्मील्य व्रजशिशवो दृशं पुरस्ताद्
भाण्डीरं पुनर् अतुल्य विलोकयन्तः ।
सात्मानं पशुपटलीं च तत्र दावाद्
उन्मुक्तां मनसि चमत्क्रियाम् अवापुः ॥११॥

अप्रियादेः क्रिया कुर्यान् नालौकिक्य् अपि विस्मयम् ।
असाधारण्य् अपि मनाक् करोत्य् एव प्रियस्य सा ॥१२॥
प्रियात् प्रियस्य किम् उत सर्वलोकोत्तरोत्तरा ।
इत्य् अत्र विस्मये प्रोक्ता रत्यनुग्रहमाधुरी ॥१३॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
गौणभक्तिरसनिरूपणे अद्भुतभक्तिरसलहरी द्वितीया ॥
४।३
वीरभक्तिरसाख्या तृतीयलहरी

सैवोत्साहरतिः स्थायी विभावाद्यैर् निजोचितः ।
आनीयमाना स्वाद्यत्वं वीरभक्तिरसो भवेत् ॥१॥
युद्धदानदयाधर्मैश् चतुर्धावीर उच्यते ।
आलम्बन इह प्रोक्त एष एव चतुर्विधः ॥२॥
उत्साहस् त्व् एष भक्तानां सर्वेषाम् एव सम्भवेत् ॥३॥

तत्र युद्धवीरः _
परितोषाय कृष्णस्य दधद् उत्साहम् आहवे ।
सखा बन्धुविशेषो वा युद्धवीर इहोच्यते ॥४॥
प्रतियोद्धा मुकुन्दो वा तस्मिन् वा प्रेक्षके स्थिते ।
तदीयेच्छावेशेनात्र भवेद् अन्यः सुहृद्वरः ॥५॥

तत्र कृष्णो यथा _
अपराजितमानिनं हठाच्
चटुलं त्वाम् अभिभूय माधव ।
धिनुयाम् अधुना सुहृद्गणं
यदि न त्वं समरात् पराञ्चसि ॥६॥

यथा वा _
संरम्भप्रकटीकृतप्रतिभटारम्भश्रियोः साद्भुतं
कालिन्दीपुलिने वयस्यनिकरैर् आलोक्यमानस् तदा ।
अव्युत्थापितसख्ययोर् अपि वराहङ्कारविस्फूर्जितः
श्रीदाम्नश् च बकीद्विषश् च समराटोपः पटीयान् अभूत् ॥७॥

सुहृद्वरो यथा _
सखिप्रकरमार्गणान् अगणितान् क्षिपन् सर्वतस्
तथाद्य लगुडं क्रमाद् भ्रमयति स्म दामा कृती ।
अमंस्त रचितस्तुतिर् व्रजपतेस् तनुजोऽप्य् अमुं
समृद्धपुलको यथा लगुडपञ्जरान्तःस्थितम् ॥८ ॥

प्रायः प्रकृतशूराणां स्वपक्षैर् अपि कर्हिचित् ।
युद्धकेलिसमुत्साहो जायते परमाद्भुतः ॥९ ॥

तथा च हरिवंशे _
तथा गाण्डीवधन्वानं विक्रीडन् मधुसूदनः ।
जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः ॥१० ॥ इति ।

कत्थितास्फोटविस्पर्धाविक्रमास्त्रग्रहादयः ।
प्रतियोधस्थिताः सन्तो भवन्त्य् उद्दीपना इह ॥११ ॥

तत्र कत्थितम् _
पिण्डीशूरस् त्वम् इह सुबलं कैतवेनाबलाङ्गं
जित्वा दामोदर युधि वृथा मा कृथाः कत्थितानि ।
माद्यन्न् एष त्वदलघुभुजासर्पदर्पापहारी
मन्द्रध्वानो नटति निकटे स्तोककृष्णः कलापी ॥१२ ॥

कत्थिताद्याः स्वसंस्थाश् चेद् अनुभावाः प्रकीर्तिताः ।
तथैवाहोपुरुषिका क्ष्वेडिताक्रोशवल्गनम् ॥१३ ॥
असहायेऽपि युद्धेच्छा समराद् अपलायनम् ।
भीताभयप्रदानाद्या विज्ञेयाश् चापरे बुधैः ॥१४ ॥

तत्र कत्थितम् यथा _
प्रोत्साहयस्यतितरां किम् इवाग्रहेण
मां केशिसूदन विदन्न् अपि भद्रसेनम् ।
योद्धुं बलेन समम् अत्र सुदुर्बलेन
दिव्यार्गला प्रतिभटस् त्रपते भुजो मे ॥१५ ॥

आहोपुरुषिका यथा _
धृताटोपे गोपेश्वरजलधिचन्द्रे परिकरं
निबध्नत्य् उल्लासाद् भुजसमरचर्यासमुचितम् ।
सरोमाञ्चं क्ष्वेडानिविडमुखबिम्बस्य नटतः
सुदाम्नः सोत्कण्ठं जयति मुहुर् आहोपुरुषिका ॥१६ ॥

चतुष्टयेऽपि वीराणां निखिला एव सात्त्विकाः ।
गर्वावेगधृतिव्रीडामतिहर्षावहित्थिकाः ।
अमर्षोत्सुकतासूयास्मृत्याद्या व्यभिचारिणः ॥१७ ॥
युद्धोत्साहरतिस् तस्मिन् स्थायिभावतयोदिता ।
या स्वशक्तिसहायाद्यैर् आहार्या सहजापि वा ।
जिगीषा स्थेयसी युद्धे सा युद्धोत्साह ईर्यते ॥१८ ॥

तत्र स्वशक्त्या आहार्योत्साहरतिः यथा _
स्वतातशिष्ट्या स्फुटम् अप्य् अनिच्छन्न्
आहूयमानः पुरुषोत्तमेन ।
स स्तोककृष्णो धृतयुद्धतृष्णः
प्रोद्यम्य दण्डं भ्रमयाञ्चकार ॥१९ ॥

स्वशक्त्या सहजोत्साहरतिः यथा _
शुकाकारं प्रेक्ष्य मे बाहुदण्डं
मा त्वं भैषीः क्षुद्र रे भद्रसेन ।
हेलारम्भेणाद्य निर्जित्य रामं
श्रीदामाहं कृष्णम् एवाह्वयेय ॥२० ॥

यथा व _
बलस्य बलिनो बलात् सुहृदनीकम् आलोडयन्
पयोधिम् इव मन्दरः कृतमुकुन्दपक्षग्रहः ।
जनं विकटगर्जितैर् वधिरयन् स धीरस्वरो
हरेः प्रमदम् एककः समिति भद्रसेनो व्यधात् ॥२१ ॥

सहायेनाहार्योत्साहरतिः यथा _
मयि वल्गति भीमविक्रमे
भज भङ्गं न हि सङ्गरादितः ।
इति मित्रगिरा वरूथपः
सविरूपं विब्रुवन् हरिं ययौ ॥२२ ॥

सहायेन सहजोत्साहरतिः यथा _
सङ्ग्रामकामुकभुजः स्वयम् एव कामं
दामोदरस्य विजयाय कृती सुदामा ।
साहाय्यम् अत्र सुबलः कुरुते बली चेज्
जातो मणिः सुजटितो वरहाटकेन ॥२३ ॥

सुहृद् एव प्रतिभटो वीरे कृष्णस्य न त्वरिः ।
स भक्तक्षोभकारित्वाद् रौद्रे त्व् आलम्बनो रसे ।
रागाभावो दृगादीनां रौद्राद् अस्य विभेदकः ॥२४ ॥

अथ दानवीरः _
द्विविधो दानवीरः स्याद् एकस् तत्र बहुप्रदः।
उपस्थितदुरापार्थत्यागी चापर उच्यते॥२५॥

तत्र बहुप्रदः _
सहसा दीयते येन स्वयं सर्वस्वम् अप्य् उत।
दामोदरस्य सौख्याय प्रोच्यते स बहुप्रदः॥२६॥
सम्प्रदानस्य वीक्षाद्या अस्मिन्न् उद्दीपना मताः।
वाञ्छिताधिकदातृत्वं स्मितपूर्वाभिभाषणम्॥२७॥
स्थैर्यदाक्षिण्यधैर्याद्या अनुभावा इहोदिताः।
वितर्कौत्सुक्यहर्षाद्या विज्ञेया व्यभिचारिणः॥२८॥
दानोत्साहरतिस् त्व् अत्र स्थायिभावतयोदिता।
प्रगाढा स्थेयसी दित्सा दानोत्साह इतीर्यते॥२९॥
द्विधा बहुप्रदोऽप्य् एष विद्वद्भिर् इह कथ्यते।
स्याद् आभ्युदयिकस् त्व् एकः परस् तत्सम्प्रदानकः॥३०॥

तत्र आभ्युदायिकः _
कृष्णस्याभ्युदयार्थं तु येन सर्वस्वम् अर्प्यते।
अर्थिभ्यो ब्राह्मणादिभ्यः स आभ्युदायिको भवेत्॥३१॥

यथा _
व्रजपतिर् इह सूनोर् जातकार्थं तथासौ
व्यतरद् अमलचेताः सञ्चयं नैचिकीनाम्।
पृथुर् अपि नृगकीर्तिः साम्प्रतं संवृतासीद्
इति निजगदुर् उच्चैर् भूसुरा येन तृप्ताः॥३२॥

अथ तत्सम्प्रदानकः _
ज्ञातये हरये स्वीयम् अहंताममतास्पदम्।
सर्वस्वं दीयते येन स स्यात् तत्सम्प्रदानकः॥३३॥
तद्दानं प्रीतिपूजाभ्यां भवेद् इत्य् उदितं द्विधा॥३४॥

तत्र प्रीतिदानम् _
प्रीतिदानं तु तस्मै यद् दद्याद् बन्ध्वादिरूपिणे॥३५॥

यथा __
चार्चिक्यं वैजयन्तीं पटम् उरुपुरटोद्भासुरं भूषणानां
श्रेणिं माणिक्यभाजं गजरथतुरगान् कर्बुरान् कर्बुरेण।
दत्त्वा राज्यं कुटुम्बं स्वम् अपि भगवते दित्सुर् अप्य् अन्यद् उच्चैर्
देयं कुत्राप्य् अदृष्ट्वा मखसदसि तदा व्याकुलः पाण्डवोऽभूत्॥३६॥

पुजादानं __
पुजादानं तु तस्मै यद् विप्ररूपाय दीयते॥३७॥

यथा अष्टमे 8.20.11 _
यजन्ति यज्ञं क्रतुभिर् यम् आदृता
भवन्त आम्नायविधानकोविदाः।
स एव विष्णुर् वरदो ऽस्तु वा परो
दास्याम्य् अमुष्मै क्षितिम् ईप्सितां मुने॥३८॥

यथा वा दशरूपके _
लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः।
बलिनैव स येनास्य भिक्षापात्रीकृतः करः॥३९॥

अथ उपस्थितदुरापार्थत्यागी _
उपस्थितदुरापार्थत्यग्य् असौ येन नेष्यते।
हरिणा दीयमानोऽपि सार्ष्ट्यादिस् तुष्यता वरः॥४०॥
पूर्वतोऽत्र विपर्यस्तकारकत्वं द्वयोर् भवेत्।
अस्मिन्न् उद्दीपनाः कृष्णकृपालापस्मितादयः॥४१॥
अनुभावास् तदुत्कर्षवर्णनद्रढिमादयः।
अत्र सञ्चारिता भूम्ना धृतेर् एव समीक्ष्यते॥४२॥
त्यागोत्साहरतिर् धीरैः स्थायी भाव इहोदितः।
त्यागेच्छा तादृशी प्रौढा त्यागोत्साह इतीर्यते॥४३॥

यथा हरिभक्तिसुधोदये 7.28 _
स्थानाभिलाषी तपसि स्थितो ऽहं
त्वां प्राप्तवान् देवमुनीन्द्रगुह्यम्।
काचं विचिन्वन्न् अपि दिव्यरत्नं
स्वामिन् कृतार्थो ऽस्मि वरं न याचे॥४४॥

यथा वा तृतीये 3.15.48 _
नात्यन्तिकं विगणयन्त्य् अपि ते प्रसादं
किं वान्यद् अर्पितभयं भ्रुव उन्नयैस् ते।
ये ऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्तन्यतीर्थयशसः कुशला रसज्ञाः॥४५॥

अयम् एव भवन्न् उच्चैः प्रौढभावविशेषभाक्।
धुर्यादीनां तृतीयस्य वीरस्य पदवीं व्रजेत्॥४६॥

अथ दयावीरः _

कृपार्द्रहृदयत्वेन खण्डशो देहम् अर्पयन्।
कृष्णायाच्छन्नकृपाय दयावीर इहोच्यते ॥४७॥
उद्दीपना इह प्रोक्तास् तदार्तिव्यञ्जनादयः।
निजप्राणव्ययेनापि विपन्नत्राणशीलता ॥४८॥
आश्वासनोक्तयः स्थैर्यम् इत्य् आद्यास् तत्र विक्रियाः।
औत्सुक्यम् अतिहर्षाद्या ज्ञेयाः सञ्चारिणो बुधैः ॥४९॥
दयोत्साहरतिस् त्व् अत्र स्थायिभाव उदीर्यते।
दयोद्रेकभृद् उत्साहो दयोत्साह इहोदितः ॥५०॥

यथा _
वन्दे कुट्मलिताञ्जलिर् मुहुर् अहं वीरं मयूरध्वजं
येनार्धं कपटद्विजाय वपुषः कंसद्विषे दित्सता।
कष्टं गद्गदिकाकुलोऽस्मि कथनारम्भाद् अहो धीमता
सोल्लासं क्रकचेन दारितम् अभूत् पत्नीसुताभ्यां शिवः ॥५१॥

हरेश् चेत् तत्त्वविज्ञानं नैवास्य घटते दया।
तदभावे त्व् असौ दानवीरेऽन्तर्भवति स्फुटम् ॥५२॥
वैष्णवत्वाद् रतिः कृष्णे क्रियतेऽनेन सर्वदा।
कृतात्र द्विजरूपे च भक्तिस् तेनास्य भक्तता ॥५३॥
अन्तर्भावं वदन्तोऽस्य दानवीरे दयात्मनः।
वोपदेवादयो धीरा वीरम् आचक्षते त्रिधा ॥५४॥

अथ धर्मवीरः _
कृष्णैकतोषणे धर्मे यः सदा परिनिष्ठितः।
प्रायेण धीरशान्तस् तु धर्मवीरः स उच्यते ॥५५॥
उद्दीपना इह प्रोक्ताः सच्छास्त्रश्रवणादयः।
अनुभावा नयास्तिक्यसहिष्णुत्वयमादयः ॥५६॥
धर्मोत्साहरतिर् धीरैः स्थायी भाव इहोच्यते।
धर्मैकाभिनिवेशस् तु धर्मोत्साहो मतः सताम् ॥५७॥

यथा _
भवद् अभि रतिहेतून् कुर्वता सप्ततन्तून्
पुरम् अभि पुरुहूते नित्यम् एवोपहूते।
दनुजदमन तस्याः पाण्डुपुत्रेण गण्डः
सुचिरम् अरचि शच्याः सव्यहस्ताङ्कशायी ॥५८॥

यज्ञः पूजाविशेषोऽस्य भुजाद्यङ्गानि वैष्णवः।
ध्यात्वेन्द्राद्याश्रयत्वेन यद् एष्व् आहुतिर् अर्प्यते ॥५९॥
अयं तु साक्षात् तस्यैव निदेशात् कुरुते मखान्।
युधिष्ठिरोऽम्बुधिः प्रेम्णां महाभागवतोत्तमः ॥६०॥

दानादित्रिविधं वीरं वर्णयन्तः परिस्फुटम्।
धर्मवीरं न मन्यन्ते कतिचिद् धनिकादयः१७ ॥६१॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
वीरभक्तिरसनिरूपणे अद्भुतभक्तिरसलहरी तृतीया ॥

४।४
करुणभक्तिरसाख्या चतुर्थलहरी

आत्मोचितैर् विभावाद्यैर् नीता पुष्टिं सतां हृदि।
भवेच् छोकरतिर् भक्तिरसो हि करुणाभिधः ॥१॥
अव्युच्छिन्नमहानन्दोऽप्य् एष प्रेमविशेषतः।
अनिष्टाप्तेः पदतया वेद्यः कृष्णोऽस्य च प्रियः ॥२॥
तथानवाप्ततद्भक्तिसौख्यश् च स्वप्रियो जनः।
इत्य् अस्य विषयत्वेन ज्ञेया आलम्बनास् त्रिधा ॥३॥
तत्तद्वेदी च तद्भक्त आश्रयत्वेन च त्रिधा।
सोऽप्य् औचित्येन विज्ञेयः प्रायः शान्तादिवर्जितः।
तत्कर्मगुणरूपाद्या भवत्य् उद्दीपना इह ॥४॥
अनुभावा मुखे शोषो विलापः स्रस्तगात्रता।
श्वासक्रोशनभूपातघातोरस् ताडनादयः ॥५॥
अत्राष्टौ सात्त्विका जाड्यनिर्वेदग्लानिदीनताः।
चिन्ताविषादात्सुक्यचापलोन्मादमृत्यवः।
आलस्यापस्मृतिव्याधिमोहाद्या व्यभिचारिणः ॥६॥
हृदि शोकतयांशेन गता परिणतिं रतिः।
उक्ता शोकरतिः सैव स्थायी भाव इहोच्यते ॥७॥

तत्र कृष्णो यथा श्रीदशमे 10.16.10 _
तं नागभोगपरिवीतम् अदृष्टचेष्टम्
आलोक्य तत्प्रियसखाः पशुपा भृशार्ताः।
कृष्णे ऽर्पितात्मसुहृदर्थकलत्रकामा
दुःखानुशोकभयम् ऊढधियो निपेतुः ॥८॥

यथा वा _
फणिह्रदम् अवगाढे दारुणं पिञ्छचूडे
स्खलदशिशिरबाष्पस्तोमधौतोत्तरीया।
निखिलकरणवृत्तिस्तम्भिनीम् आललम्बे
विषम् अगतिम् अवस्थां गोष्ठराजस्य राज्ञी ॥९॥

तस्य प्रियजनो यथा _
कृष्णप्रियाणाम् आकर्षे शङ्खचूडेन निर्मिते।

नीलाम्बरस्य वक्त्रेन्दुर् नीलिमानं मुहुर् दधे ॥१० ॥

स्वप्रियो यथा हंसदूते 54 __
विराजन्ते यस्य व्रजशिशुकुलस्तेयविकल
स्वयम्भूचूडाग्रैर् लुलितशिखराः पादनखराः ।
क्षणं यान् आलोक्य प्रकटपरमानन्दविवशः
स देवर्षिर् मुक्तान् अपि तनुभृतः शोचति भृशम् ॥११ ॥

यथा वा _
मातर् माद्रि गता कुतस् त्वम् अधुना हा क्वासि पाण्डो पितः
सान्द्रानन्दसुधाब्धिर् एष युवयोर् नाभूद् दृशां गोचरः ।
इत्य् उच्चैर् नकुलानुजो विलपति प्रेक्ष्य प्रमोदाकुलो
गोविन्दस्य पदारविन्दयुगलप्रोद्दामकान्तिच्छटाम् ॥१२ ॥

रतिं विनापि घटते हास्यादेर् उद्गमः क्वचित् ।
कदाचिद् अपि शोकस्य नास्य सम्भावना भवेत् ॥१३ ॥
रतेर् भूम्ना क्रशिम्ना च शोको भूयान् कृशश् च सः ।
रत्या सहाविनाभावात् काप्य् एतस्य विशिष्टता ॥१४ ॥

अपि च _
कृष्णैश्वर्याद्यविज्ञानं कृतं नैषाम् अविद्यया ।
किन्तु प्रेमोत्तररसविशेषेणैव तत् कृतम् ॥१५ ॥
अतः प्रादुर्भवन् शोको लब्धाप्य् उद्भटतां मुहुः ।
दुरूहाम् एव तनुते गतिं सौख्यस्य काम् अपि ॥१६ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
गौणभक्तिरसनिरूपणे करुणभक्तिरसलहरी चतुर्थी ॥
४ ।५
रौद्रभक्तिरसाख्या पञ्चमलहरी

नीता क्रोधरतिः पुष्टिं विभावाद्यैर् निजोचितैः ।
हृदि भक्तजनस्यासौ रौद्रभक्तिरसो भवेत् ॥१ ॥
कृष्णो हितोऽहितश् चेति क्रोधस्य विषयस् त्रिधा ।
कृष्णे सखीजरत्याद्याः क्रोधस्याश्रयतां गताः ।
भक्ताः सर्वविधा एव हिते चैवाहिते तथा ॥२ ॥

तत्र कृष्णे सख्याः क्रोधः _
सखीक्रोधे भवेत् सख्याः कृष्णाद् अत्याहिते सति ॥३ ॥

यथा विदग्धमाधवे 2.37
अन्तःक्लेशकलङ्किताः किल वयं यामो ऽद्य याम्यां पुरीं
नायं वञ्चनसञ्चयप्रणयिनं हासं तथाप्य् उज्झति ।
अस्मिन् सम्पुटिते गभीरकपटैर् आभीरपल्लीविटे
हा मेधाविनि राधिके तव कथं प्रेमा गरीयान् अभूत् ॥४ ॥

तत्र जरत्याः क्रोधः _
क्रोधो जरत्या वध्वादिसम्बन्धे प्रेक्षिते हरौ ॥५ ॥

यथा _
अरे युवतितस्कर प्रकटम् एव वध्वाः पटस्
तवोरसि निरीक्ष्यते बत न नेति किं जल्पसि ।
अहो व्रजनिवासिनः शृणुत किं न विक्रोशनं
व्रजेश्वरसुतेन मे सुतगृहेऽग्निर् उत्थापितः ॥६ ॥

गोवर्धनं महामल्लं विनान्येषां व्रजौकसाम् ।
सर्वेषाम् एव गोविन्दे रतिः प्रौढा विराजते ॥७ ॥

अथ हितः __
हितस् त्रिधानवहितः साहसी चेर्ष्युर् इत्य् अपि ॥८ ॥

तत्र अनवहितः _
कृष्णपालनकर्तापि तत्कर्माभिनिवेशतः ।
क्वचित् तत्र प्रमत्तो यः प्रोक्तोऽनवहितोऽत्र सः ॥९ ॥

यथा _
उत्तिष्ठ मूढ कुरु मा विलम्बं
वृथैव धिक् पण्डितमानिनी त्वम् ।
क्रटचत्पलाशिद्वयम् अन्तरा ते
बद्धः सुतोऽसौ सखि बम्भ्रमीति ॥१० ॥

अथ साहसी _
यः प्रेरको भयस्थाने साहसी स निगद्यते ॥११ ॥

यथा _
गोविन्दः प्रियसुहृदां गिरैव यातस्
तालानां विपिनम् इति स्फुटं निशम्य ।
भ्रूभेदस्थपुटितदृष्टिर् आद्यम् एषां
डिम्भानां व्रजपतिगेहिनी ददर्श ॥१२ ॥

अथ ईर्ष्युः _

ईर्ष्युर् मानधना प्रोक्ता प्रौढेर्ष्याक्रान्तमानसा ॥१३ ॥

यथा _
दुर्मानमन्थमथिते कथयामि किं ते
दूरं प्रयाहि सविधे तव जाज्ज्वलीमि ।
हा धिक् प्रियेण चिकुराञ्चितपिञ्छकोट्या
निर्मञ्छिताग्रचरणाप्य् अरुणाननासि ॥१४ ॥

अथ अहितः _
अहितः स्याद् द्विधा स्वस्य हरेश् चेति प्रभेदतः ॥१५ ॥

तत्र स्वस्याहितः _
अहितः स्वस्य स स्याद् यः कृष्णसम्बन्धबाधकः ॥१६ ॥

यथा उद्धवसन्देशे 74 _
कृष्णं मुष्णन् अकरुणबलाद् गोपनारीवधार्थी
मा मर्यादाम् यदुकुलभुवाम् भिन्धिरे गान्दिनेयः ।
इति उत्तुङ्गा मम मधुपुरे यात्रया तत्र तासां
वित्रस्तानां परिववलिरे वल्लवीनां विलापाः ॥१७ ॥

अथ हरेर् अहितः _
अहितस् तु हरेस् तस्य वैरिपक्षो निगद्यते ॥१८ ॥

यथा _
हरौ श्रुतिशिरःशिखा मणिमरीचिनीराजित
स्फुरच्चरणपङ्कजेऽप्य् अवमतिं व्यनक्त्य् अत्र यः ।
अयं क्षिपति पाण्डवः शमनदण्डघोरं हठात्
त्रिर् अस्य मुकुटोपरि स्फुटम् उदीर्य सव्यं पदम् ॥१९ ॥

सोल्लुण्ठहासवक्रोक्तिकटाक्षानादरादयः ।
कृष्णाहिताहितस्थाः स्युर् अमी उद्दीपना इह ॥२० ॥
हस्तनिस्पेषणं दन्तघट्टनं रक्तनेत्रता ।
दष्टौष्ठतातिभ्रूकुटी भुजास्फालनताडनाः ॥२१ ॥
तुष्णीकता नतास्यत्वं निश्वासो भुग्नदृष्टिता ।
भर्त्सनं मूर्धविधूतिर् दृगन्ते पाटलच्छविः ॥२२ ॥
भ्रूभेदाधरकम्पाद्या अनुभावा इहोदिताः ।
अत्र स्तम्भादयः सर्वे प्राकट्यं यान्ति सात्त्विकाः ॥२३ ॥
आवेगो जडता गर्वो निर्वेदो मोहचापले ।
असूयौग्र्यं तथामर्षश्रमाद्या व्यभिचारिणः ॥२४ ॥
अत्र क्रोधरतिः स्थायी स तु क्रोधस् त्रिधा मतः ।

कोपो मन्युस् तथा रोषस् तत्र कोपस् तु शत्रुगः ॥२५ ॥
मन्युर् बन्धुषु ते पूज्यसमन्यूनास् त्रिधोदिताः ।
रोषस् तु दयिते स्त्रीणाम् अतो व्यभिचरत्य् असौ ॥२६ ॥
हस्तपेषादयः कोपे मन्यौ तुष्णीकतादयः ।
दृगन्तपाटलत्वाद्या रोषे तु कथिताः क्रियाः ॥२७ ॥

तत्र वैरिणि यथा _
निरुध्य पुरम् उन्मदे हरिम् अगाधसत्त्वाश्रयं
मृधे मगधभूपतौ किम् अपि वक्रम् आक्रोशति ।
दृशं कवलितद्विषद्विसरजाङ्गले नुनोद
दहदिङ्गलप्रवलपिङ्गलां लाङ्गली ॥२८ ॥१८

पूज्यो यथा विदग्धमाधवे 2.22 _
क्रोशन्त्यां करपल्लवेन बलवान् सद्यः पिधत्ते मुखं
धावन्त्यां भयभाजि विस्तृतभुजो रुन्धे पुरः पद्धतिम् ।
पादान्ते विलुठत्य् असौ मयि मुहुर् दष्टाधरायां रुषा
मातश् चण्डि मया शिखण्डमुकुटाद् आत्माभिरक्ष्यः कथम् ॥२९ ॥

समे यथा _
ज्वलति दुर्मुखि मर्मणि मुर्मुरस्
तव गिरा जटिले निटिले च मे ।
गिरिधरः स्पृशति स्म कदा मदाद्
दुहिरं दुहितुर् मम पामरि ॥३० ॥

न्यूने यथा _
हन्त स्वकीयकुचमूर्ध्नि मनोहरोऽयं
हारश् चकास्ति हरिकण्ठतटीचरिष्णुः ।
भोः पश्यत स्वकुलकज्जलमञ्जरीयं
कुटेन मां तद् अपि वञ्चयते वधूटी ॥३१ ॥

अस्मिन् न तादृशो मन्यौ वर्तते रत्यनुग्रहः ।
उदाहरणमात्राय तथाप्य् एष निदर्शितः ॥३२ ॥
क्रोधाश्रयाणां शत्रूणां चैद्यादीनां स्वभावतः ।
क्रोधो रतिविनाभावान् न भक्तिरसतां व्रजेत् ॥३३ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
गौणभक्तिरसनिरूपणे रौद्रभक्तिरसलहरी पञ्चमी ॥

४ ।६
भयानकभक्तिरसाख्या षष्ठलहरी

वक्ष्यमाणैर् विभावाद्यैः पुष्टिं भयरतिर् गता।
भयानकाभिधो भक्तिरसो धीरैर् उदीर्यते ॥१॥
कृष्णश् च दारुणाश् चेति तस्मिन्न् आलम्बना द्विधा।
अनुकम्प्येषु सागस्सु कृष्णस् तस्य च बन्धुषु ॥२॥
दारुणाः स्नेहतः शश्वत्तदनिष्टाप्तिदर्शिषु।
दर्शनाच् छ्रवणाच् चेति स्मरणाच् च प्रकीर्तिताः ॥३॥

तत्र अनुकम्प्येषु कृष्णो यथा _
किं शुष्यद्वदनोऽपि मुञ्च खचितं चित्ते पृथुं वेपथुं
विश्वस्य प्रकृतिं भजस्व न मनाग् अप्य् अस्ति मन्तुं तव।
उष्मन्नक्षितम् ऋक्षराज रभसाद् विस्तीर्य वीर्यं त्वया
पृथ्वी प्रत्युत युद्धकौतुकमयी सेवैव मे निर्मिता ॥४॥

यथा वा _
मुरमथन पुरस् ते को भुजङ्गस् तपस्वी
लघुहरम् इति कार्षीर् मा स्म दीनाय मन्युम्।
गुरुर् अयम् अपराधस् तथ्यम् अज्ञानतोऽभूद्
अशरणम् अतिमूढं रक्ष रक्ष प्रसीद ॥५॥

बन्धुषु दारुणा दर्शनाद् यथा _
हा किं करोमि तरलं भवनान्तराले
गोपेन्द्र गोपय बलाद् उपरुध्य बालम्।
क्ष्मामण्डलेन सह चञ्चलयन् मनो मे
शृङ्गाणि लङ्घयति पश्य तुरङ्गदैत्यः ॥६॥

श्रवणाद् यथा __
शृण्वन्ती तुरगदानवं रुषा
गोकुलं किल विशन्तम् उद्धुरम्।
द्राग् अभूत् तनयरक्षणाकुला
शुष्यदास्यजलजा व्रजेश्वरी ॥७॥

स्मरणाद् यथा
विरम विरम मातः पूतनायाः प्रसङ्गात्
तनुम् इयम् अधुनापि स्मर्यमाणा धुनोति।
कवलयितुम् इवान्धीकृत्य बालं घुरन्ती
वपुर् अतिपुरुषं या घोरम् आविश्चकार ॥८॥

विभावस्य भ्रूकुट्याद्यास् तस्मिन्न् उद्दीपना मताः।
मुखशोषणम् उच्छ्वासः परावृत्य विलोकनम् ॥९॥

स्वसङ्गोपनम् उद्घूर्णा शरणान्वेषणं तथा।
क्रोशनाद्याः क्रियाश् चात्र सात्त्विकाश् चाश्रुवर्जिताः ॥१०॥
इह सन्त्रासमरणचापलावेगदीनताः।
विषादमोहापस्मारशङ्काद्या व्यभिचारिणः ॥११॥
अस्मिन् भग्नरतिः स्थायी भावः स्याद् अपराधतः।
भीषणेभ्यश् च तत्र स्याद् बहुधैवापराधिता ॥१२॥
तज्ज्ञा भीर् नापरत्र स्याद् अनुग्राह्यजनान् विना।
आकृत्या ये प्रकृत्या ये ये प्रभावेण भीषणाः ॥१३॥
एतदालम्बना भीतिः केवलप्रेमशालिषु।
नारीबालादिषु तथा प्रायेणात्रोपजायते ॥१४॥
आकृत्या पूतनाद्याः स्युः प्रकृत्या दुष्टभूभुजः।
भीषणास् तु प्रभावेण सुरेन्द्रगिरिशादयः ॥१५॥
सदा भगवतो भीतिं गता आत्यन्तिकीम् अपि।
कंसाद्या रतिशून्यत्वाद् अत्र नालम्बना मताः ॥१६॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
गौणभक्तिरसनिरूपणे भयानकभक्तिरसलहरी षष्ठी ॥

४।७
बीभत्सभक्तिरसाख्या सप्तमलहरी

पुष्टिं निजविभावाद्यैर् जुगुप्सारतिर् आगता।
असौ भक्तिरसो धीरैर् बीभत्साख्य इतीर्यते ॥१॥
अस्मिन्न् आश्रितशान्ताद्या धीरैर् आलम्बना मताः ॥२॥

यथा _
पाण्डित्यं रतहिण्डकाध्वनि गतो यः कामदीक्षाव्रती
कुर्वन् पूर्वम् अशेषषिड्गनगरी साम्राज्यचर्याम् अभूत्।
चित्रं सोऽयम् उदीरयन् हरिगुणानुद्बाष्पदृष्टिर् जनो
दृष्टे स्त्रीवदने विकूणितमुखो विष्टभ्य निष्ठीवति ॥३॥

अत्र निष्ठीवनं वक्त्रकूणनं घ्राणसंवृतिः।
धावनं कम्पपुलकप्रस्वेदाद्याश् च विक्रियाः ॥४॥
इह ग्लानिश्रमोन्मादमोहनिर्वेददीनताः।
विषादचापलावेगजाड्याद्यो व्यभिचारिणः ॥५॥
जुगुप्सारतिर् अत्र स्यात् स्थायी सा च विवेकजा।
प्रायिकी चेति कथिता जुगुप्सा द्विविधा बुधैः ॥६॥

तत्र विवेकजा _
जातकृष्णरतेर् भक्तविशेषस्य तु कस्यचित्।

विवेकोत्था तु देहादौ जुगुप्सा स्याद् विवेकजा ॥७ ॥

यथा _
घनरुधिरमये त्वचा पिनद्धे
पिशितविमिश्रितविस्रगन्धभाजि ।
कथम् इह रमतां बुधः शरीरे
भगवति हन्त रतेर् लवेऽप्य् उदीर्णे ॥८ ॥

अथ प्रायिकी _
अमेध्यपूत्यनुभवात् सर्वेषाम् एव सर्वतः ।
या प्रायो जायते सेयं जुगुप्सा प्रायिकी मता ॥९ ॥

यथा _
असृङ्मूत्राकीर्णे घनशमलपङ्कव्यतिकरे
वसन्न् एष क्लिन्नो जडतनुर् अहं मातुर् उदरे ।
लभे चेतःक्षोभं तव भजनकर्माक्षमतया
तद् अस्मिन् कंसारे कुरु मयि कृपासागर कृपाम् ॥१० ॥

यथा वा _
घ्राणोद्घूर्णकपूतगन्धिविकटे कीटाकुले देहली
स्रस्तव्याधितयूथगूथघटनानिर्धूतनेत्रायुषि ।
कारानामनि हन्त मागधयमेनामी वयं नारके
क्षिप्तास् ते स्मृतिम् आकलय्य नरकध्वंसिन्न् इह प्राणिमः ॥११ ॥

लब्धकृष्णरतेर् एव सुष्ठु पूतं मनः सदा ।
क्षुभ्यत्य् अहृद्य् अलेशेऽपि ततोऽस्यां रत्यनुग्रहः ॥१२ ॥
हास्यादीनां रसत्वं यद् गौणत्वेनापि कीर्तितम् ।
प्राचां मतानुसारेण तद् विज्ञेयं मनीषिभिः ॥१३ ॥
अमी पञ्चैव शान्ताद्या हरेर् भक्तिरसा मताः ।
एषु हास्यादयः प्रायो बिभ्रति व्यभिचारिताम् ॥१४ ॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
गौणभक्तिरसनिरूपणे बीभत्सभक्तिरसलहरी सप्तमी ॥

४ ।८
रसानां मैत्रीवैरस्थितिनाम्नी अष्टमलहरी

अथामीषां क्रमेणैव शान्तादीनां परस्परम् ।
मित्रत्वं शात्रवत्वं च रसानाम् अभिधीयते ॥१ ॥
शान्तस्य प्रीतबीभत्सधर्मवीराः सुहृद्वराः ।
अद्भुतश् चैष प्रीतादिषु चतुःष्व् अपि ॥२ ॥
द्विषन्न् अस्य शुचिर् युद्धवीरो रौद्रो भयानकः ॥३ ॥
सुहृत्प्रीतस्य बीभत्सः शान्तो वीरद्वयं तथा ।
वैरी शुचिर् युद्धवीरो रौद्रश् चैकविभावकः ॥४ ॥
प्रेयसस् तु शुचिर् हास्यो युद्धवीरः सुहृद्वराः ।
द्विषो वत्सलबीभत्सरौद्रा भीष्मश् च पूर्ववत् ॥५ ॥
वत्सलस्य सुहृद्धास्यः करुणो भीष्मभित् तथा ।
शत्रुः शुचिर् युद्धवीरः प्रीतो रौद्रश् च पूर्ववत् ॥६ ॥
शुचेर् हास्यस् तथा प्रेयान् सुहृद् अस्य प्रकीर्तितः ।
द्विषो वत्सलबीभत्सशान्तरौद्रभयानकाः ।
प्राहुर् एकेऽस्य सुहृदं वीरयुग्मं परे रिपुम् ॥७ ॥
मित्रं हास्यस्य बीभत्सः शुचिः प्रेयान् सवत्सलः ।
प्रतिपक्षस् तु करुणस् तथा प्रोक्तो भयानकः ॥८ ॥
अद्भुतस्य सुहृद् वीरः पञ्च शान्तादयस् तथा ।
प्रतिपक्षो भवेद् अस्य रौद्रो बीभत्स एव च ॥९ ॥
वीरस्य त्व् अद्भुतो हास्यः प्रेयान् प्रीतिस् तथा सुहृत् ।
भयानको विपक्षोऽस्य कस्यचिच् छान्त एव च ॥१० ॥
करुणस्य सुहृद्रौद्रो वत्सलश् च विलोक्यते ।
वैरी हास्योऽस्य सम्भोगशृङ्गारश् चाद्भुतस् तथा ॥११ ॥
रौद्रस्य करुणः प्रोक्तो वीरश् चापि सुहृद्वरः ।
प्रतिपक्षस् तु हास्येऽस्य शृङ्गारो भीषणोऽपि च ॥१२ ॥
भयानकस्य बीभत्सः करुणश् च सुहृद्वरः ।
द्विषन्तु वीरशृङ्गारहास्यरौद्राः प्रकीर्तिताः ॥१३ ॥
बीभत्सस्य भवेच् छान्तो हास्यः प्रीतिस् तथा सुहृत् ।
शत्रुः शुचिस् तथा प्रेयान् ज्ञेया युक्त्या परे च ते ॥१४ ॥

तत्र सुहृत्कृत्यम् __
कथितेभ्यः परे ये स्युस् ते तट्स्थाः सतां मताः ॥१५ ॥
सुहृदामिश्रणां सम्यग् आस्वादं कुरुते रसम् ॥१६ ॥
द्वयोस् तु मिश्रणे साम्यं दुःशकं स्यात् तुलाधृतम् ।
तस्माद् अङ्गाङ्गिभावेन मेलनं विदुषां मतम् ॥१७ ॥
भवेन् मुख्योऽथ वा गौणो रसोऽङ्गी किल यत्र यः ।
कर्तव्यं तत्र तस्याङ्गं सुहृद् एव रसो बुधैः ॥१८ ॥
अथाङ्गित्वं प्रथमतो मुख्यानाम् इह लिख्यते ।
अङ्गतां यत्र सुहृदो मुख्या गौणाश् च बिभ्रति ॥१९ ॥

तत्र शान्तेऽङ्गिनि प्रीतस्याङ्गता यथा _
जीवस्फुलिङ्गवह्नेर् महसो घनचित्स्वरूपस्य ।
तस्य पदाम्बुजयुगलं किं वा संवाहयिष्यामि ॥२० ॥
अत्र मुख्येऽङ्गिनि मुख्यस्याङ्गता ।

तत्रैव बीभत्सस्य यथा _
अहम् इह कफशुक्रशोणितानां
पृथुकुतुपे कुतुकी रतः शरीरे ।
शिव शिव परमात्मनो दुरात्मा
सुखवपुषः स्मरणेऽपि मन्थरोऽस्मि ॥२१॥
अत्र मुख्य एव गौणस्य ।

तत्रैव प्रीतस्याद्भुतबीभत्सयोश् च यथा _
हित्वास्मिन् पिशितोपनद्धरुधिरक्लिन्ने मुदं विग्रहे
प्रीत्युत्सिक्तमनाः कदाहम् असकृद्दुस्तर्कचर्यास्पदम् ।
आसीनं पुरटासनोपरि परं ब्रह्माम्बुदश्यामलं
सेविष्ये चलचारुचामरमरुत्सञ्चार चातुर्यतः ॥२२॥
अत्र मुख्य एव मुख्यस्य गौणयोश् च ।

अथ प्रीते शान्तस्य यथा _
निरविद्यतया सपद्य् अहं
निरवद्यः प्रतिपद्यमाधुरीम् ।
अरविन्दविलोचनं कदा
प्रभुम् इन्दीवरसुन्दरं भजे ॥२३॥
अत्र मुख्ये मुख्यस्य ।

तत्रैव बीभत्सस्य यथा _
स्मरन् प्रभुपादाम्भोजं नटन्न् अटति वैष्णवः ।
यस् तु दृष्ट्या पद्मिनीनाम् अपि सुष्ठु हृणीयते ॥२४॥
अत्र मुख्ये गौणस्य ।

तत्रैव बीभत्सशान्तवीराणां यथा _
तनोति मुखविक्रियां युवतिसङ्गरङ्गोदये
न तृप्यति न सर्वतः सुखमये समाधाव् अपि ।
न सिद्धिषु च लालसां वहति लभ्यमानास्व् अपि
प्रभो तव पदार्चने परम् उपैति तृष्णां मनः ॥२५॥
अत्र मुख्ये मुख्यस्य गौणयोश् च ।

अथ प्रेयसि शुचेर् यथा _
धन्यानां किल मूर्धन्याः सुबलामुर् व्रजाबलाः ।
अधरं पिञ्छचूडस्य चलाश् चुलूकयन्ति याः ॥२६॥
अत्र मुख्ये मुख्यस्य ।

तत्रैव हासस्य यथा _
दृशोस् तरलितैर् अलं व्रज निवृत्य मुग्धे व्रजं
वितर्कयसि मां यथा न हि तथास्मि किं भूरिणा ।
इतीरयति माधवे नवविलासिनीं छद्मना
ददर्श सुबलो बलद्विकचदृष्टिर् अस्याननम् ॥२७॥
अत्र मुख्ये गौणस्य ।

तत्रैव शुचिहास्ययोर् यथा _
मिहिरदुहितुर् उद्यद्वञ्जुलं मञ्जुतीरं
प्रविशति सुबलोऽयं राधिकावेषगूढः ।
सरभसम् अभिपश्यन् कृष्णम् अभ्युत्थितं यः
स्मितविकशितगण्डं स्वीयम् आस्यं वृणोति ॥२८॥
अत्र मुख्ये मुख्यगौणयोः ।

अथ वत्सले करुणस्य _
निरातपत्रः कान्तारे सन्ततं मुक्तपादुकः ।
वत्सान् अवति वत्सो मे हन्त सन्तप्यते मनः ॥२९॥
अत्र मुख्ये गौणस्य ।

तत्रैव हास्यस्य यथा _
पुत्रस् ते नवनीतपिण्डम् अतनुं मुष्णन् ममान्तर्गृहाद्
विन्यस्यापससार तस्य कणिकां निद्राणडिम्भानने ।
इत्य् उक्ता कुलवृद्धया सुतमुखे दृष्टिं विभुग्नभ्रुणि
स्मेरां निक्षिपती सदा भवतु वः क्षेमाय गोष्ठेश्वरी ॥३०॥
अत्रापि मुख्ये गौणस्य ।

तत्रैव भयानकाद्भुतहास्यकरुणानां यथा _
कम्प्रा स्वेदिनि चूर्णकुन्तलतटे स्फारेक्षणा तुङ्गिते
सव्ये दोष्णि विकाशिगण्डफलका लीलास्यभङ्गीशते ।
बिभ्राणस्य हरेर् गिरीन्द्रम् उदयद्बाष्पा चिरोर्ध्वस्थितौ
पातु प्रस्नवसिच्यमानसिचया विश्वं व्रजाधीश्वरी ॥३१॥
अत्रापि मुख्ये चतूर्णां गौणानाम् ।

केवले वत्सले नास्ति मुख्यस्य खलु सौहृदम् ।
अतोऽत्र वत्सले तस्य नतरां लिखिताङ्गता ॥३२॥

अथ उज्ज्वले प्रेयसो यथा _
मद्वेषशीलिततनोः सुबलस्य पश्य
विन्यस्य मञ्जुभुजमूर्ध्नि भुजं मुकुन्दः ।
रोमाञ्चकञ्चुकजुषः स्फुटम् अस्य कर्णे
सन्देशम् अर्पयति तन्वि मदर्थम् एव ॥३३॥

अत्र मुख्ये मुख्यस्य ।

तत्रैव हास्यस्य यथा _
स्वसास्मि तव निर्दये परिचिनोषि न त्वं कुतः
कुरु प्रणयनिर्भरं मम कृशाङ्गि कण्ठग्रहम् ।
इति ब्रुवति पेशलं युवतिवेषगूढे हरौ
कृतं स्मितम् अभिज्ञया गुरुपुरस् तदा राधया ॥३४ ॥
अत्र मुख्ये गौणस्य ।

तत्रैव प्रेयोवीरयोर् यथा _
मुकुन्दोऽयं चन्द्रावलिवदनचन्द्रे चटुलभे
स्मरस्मेराम् आराद् दृशम् असकलाम् अर्पयति च ।
भुजाम् अंसे सख्युः पुलकिनि दधानः फनिनिभाम्
इभारिक्ष्वेडाभिर् वृषदनुजम् उद्योजयति च ॥३५ ॥
अत्र मुख्ये मुख्यगौणयोः ।

अथ गौणानाम् अङ्गिता _
हास्यादीनां तु गौणानां यदुदाहरणं कृतम् ।
तेनैषाम् अङ्गिता व्यक्ता मुख्यानां च तथाङ्गता ।
तथाप्य् अल्पविशेषाय किञ्चिद् एव विलिख्यते ॥३६ ॥

अथ हास्येऽङ्गिनि शुचेर् अङ्गता यथा __
मदनान्धतया त्रिवक्रया
प्रसभं पीतपटाञ्चले धृते ।
अदधाद् विनतं जनाग्रतो
हरिर् उत्फुल्लकपोलम् आननम् ॥३७ ॥
अत्र गौणेऽङ्गिनि मुख्यस्याङ्गता ।

वीरे प्रेयसो यथा _
सेनान्यं विजितम् अवेक्ष्य भद्रसेनं
मां योद्धुं मिलसि पुरः कथं विशाल ।
रामाणां शतम् अपि नोद्भटोरुधामा
श्रीदामा गणयति रे त्वम् अत्र कोऽसि ॥३८ ॥
अत्रापि गौणेऽङ्गिनि मुख्यस्य ।

रौद्रे प्रेयोवीरयोः यथा _
यदुनन्दन निन्दनोद्धतं
शिशुपालं समरे जिघांसुभिः ।
अतिलोहितलोचनोत्पलैर्
जगृहे पाण्डुसुतैर् वरायुधम् ॥३९ ॥

अत्र गौणे मुख्यगौणयोः ।

अद्भुते प्रेयोवीरहास्यानां यथा _
मित्राणीकवृतं गदायुधि गुरुंमन्यं प्रलम्बद्विषं
यष्ट्या दुर्बलया विजित्य पुरतः सोल्लुण्ठम् उद्गायतः ।
श्रीदाम्नः किल वीक्ष्य केलिसमराटोपोत्सवे पाटवं
कृष्णः फुल्लकपोलकः पुलकवान् विस्फारदृष्टिर् बभौ ॥४० ॥
अत्र गौणे मुख्यस्य गौणयोश् च ।

एवम् अन्यस्य गौणस्य ज्ञेया कविभिर् अङ्गिता ।
तथा च मुख्यगौणानां रसानाम् अङ्गतापि च ॥४१ ॥
सोऽङ्गी सर्वातिगो यः स्यान् मुख्यो गौणोऽथवा रसः ।
स एवाङ्गं भवेद् अङ्गिपोषी सञ्चारितां व्रजन् ॥४२ ॥

तथा च नाट्याचार्याः पठन्ति _
एक एव भवेत् स्थायी रसो मुख्यतमो हि यः ।
रसास् तदनुयायित्वाद् अन्ये स्युर् व्यभिचारिणः ॥४३ ॥

श्रीविष्णुधर्मोत्तरे च _
रसानां समवेतानां यस्य रूपं भवेद् बहु ।
स मन्तव्यो रसः स्थायी शेषाः सङ्चारिणो मताः ॥४४ ॥

स्तोकाद् विभावनाज् जातः सम्प्राप्य व्यभिचारिताम् ।
पुष्णन् निजप्रभुं मुख्यं गौणस् तत्रैव लीयते ॥४५ ॥
प्रोद्यन् विभावनोत्कर्षात् पुष्टिं मुख्येन लम्भितः ।
कुञ्चता निजनाथेन गौणोऽप्य् अङ्गित्वम् अश्नुते ॥४६ ॥
मुख्यस् त्व् अङ्गत्वम् आसाद्य पुष्णन्न् इन्द्रम् उपेन्द्रवत् ।
गौणम् एवाङ्गिनं कृत्वा निगूढनिजवैभवः ॥४७ ॥
अनादिवासनोद्भासवासिते भक्तचेतसि ।
भात्य् एव न तु लीनः स्याद् एष सञ्चारिगौणवत् ॥४८ ॥
अङ्गी मुख्यः स्वम् अत्राङ्गैर् भावैस् तैर् अभिवर्धयन् ।
सजातीयैर् विजातीयैः स्वतन्त्रः सन् विराजते ॥४९ ॥
यस्य मुख्यस्य यो भक्तो भवेन् नित्यनिजाश्रयः ।
अङ्गी स एव तत्र स्यान् मुख्योऽप्य् अन्योऽङ्गतां व्रजेत् ॥५० ॥

किं च
आस्वादोद्रेकहेतुत्वम् अङ्गस्याङ्गत्वम् अङ्गिनि ।
तद् विना तस्य सम्पातो वैफल्यायैव कल्पते ॥५१ ॥
यथा मृष्टरसालायां यवसादेः कथञ्चन ।
तच्चर्वणे भवेद् एव सतृणाभ्यवहारिता ॥५२ ॥

अथ वैरिकृत्यम् _
जनयत्य् एव वैरस्यं रसानां वैरिणा युतिः।
सुमृष्टपानकादीनां क्षारतिक्तादिना यथा ॥५३॥

यथा हि _
ब्रह्मिष्ठाया निष्फलो मे व्यतीतः
कालो भूयान् हा समाधिव्रतेन।
सान्द्रानन्दं तन् मया ब्रह्म मूर्तं
कोणेनाक्ष्णः साचिसव्यस्य नैक्षि ॥५४॥
तत्र शान्तस्योज्ज्वलेन वैरस्यम्।

क्षणम् अपि पितृकोटिवत्सलं तं
सुरमुनिवन्दितपादम् इन्दिरेशम्।
अभिलषति वराङ्गनानखाङ्कैः
प्रभुम् ईक्षितं मनो मे ॥५५॥
तत्र प्रीतस्योज्ज्वलेनैव।

दोर्भ्याम् अर्गलदीर्घाभ्यां सखे परिरभस्व माम्।
शिरः कृष्ण तवाघ्राय विहरिष्ये ततस् त्वया ॥५६॥
अत्र प्रेयसो वत्सलेन।

यं समस्तनिगमाः परमेशं
सात्वतास् तु भगवन्तम् उशन्ति।
तत् सुतेति बत साहसिकीं त्वां
व्याजिहीर्षतु कथं मम जिह्वा ॥५७॥
अत्र वत्सलस्य प्रीतेन।

तडिद्विलासतरला नवयौवनसम्पदः।
अद्यैव दूति तेन त्वं मया रमय माधवम् ॥५८॥
अत्रोज्ज्वलस्य शान्तेन।

चिरं जीवेति संयुज्य काचिद् आशीर्भिर् अच्युतम्।
कैलासस्था विलासेन कामुकी परिषष्वजे ॥५९॥
अत्र शुचेर् वत्सलेन।

शुचेः सम्बन्धगन्धोऽपि कथञ्चिद् यदि वत्सले।
क्वचिद् भवेत् ततः सुष्ठु वैरस्यायैव कल्पते ॥६०॥

पिशितासृङ्मयी नाहं सत्यम् अस्मि तवोचिता।
स्वापाङ्गविद्धां श्यामाङ्ग कृपयाङ्गीकुरुष्व माम् ॥६१॥
अत्र शुचेर् बीभत्सेन।

एवम् अन्यापि विज्ञेया प्राज्ञै रसविरोधिता।
प्रायेणेयं रसाभासकक्षायां पर्यवस्यति ॥६२॥

किं च _
द्वयोर् एकतरस्येह बाध्यत्वेनोपवर्णने।
स्मर्यमाणतयाप्य् उक्तौ साम्येन वचनेऽपि च ॥६३॥
रसान्तरेण व्यवधौ तटस्थेन प्रियेण वा।
विषयाश्रयभेदे च गौणेन द्विषता सह।
इत्य् आदिषु न वैरस्यं वैरिणो जनयेद् युतिः ॥६४॥

तत्र एकतरस्य बाध्यत्वेन वर्णने यथा विदग्धमाधवे 2.18 _
प्रत्याहृत्य मुनिः क्षणं विषयतो यस्मिन् मनो धित्सते
बालासौ विषयेषु धित्सति ततः प्रत्याहरन्ती मनः।
यस्य स्फूर्तिलवाय हन्त हृदये योगी सुमुत्कण्ठते
मुग्धेयं किल तस्य पश्य हृदयान् निष्क्रान्तिम् आकाङ्क्षति ॥६५॥

बाध्यत्वम् अत्र शान्तस्य शुचेर् उत्कर्षवर्णनात् ॥६६॥

स्मर्यमाणत्वे यथा _
स एष वैहासिकताविनोदैर्
व्रजस्य हासोद्गमसंविधाता।
फणीश्वरेणाद्य विकृष्यमाणः
करोति हा नः परिदेवनानि ॥६७॥

साम्येन वचने यथा _
विश्रान्तषोडशकला निर्विकल्पा निरावृतिः।
सुखात्मा भवती राधे ब्रह्मविद्येव राजते ॥६८॥

यथा वा _
राधा शान्तिर् इवोन्निद्रं निर्निमेषेक्षणं च माम्।
कुर्वती ध्यानलग्नं च वासयत्य् अद्रिकन्दरे ॥६९॥

वसान्तरेण व्यवधौ यथा _
त्वं कासि शान्ता किम् इहान्तरीक्षे
द्रष्टुं परं ब्रह्म कुतस् तताक्षी।
अस्यातिरूपात् किम् इवाकुलात्मा
रम्भे समाविश्य भिदा स्मरेण ॥७०॥

अत्राद्भुतेन व्यवधिः।

विषयभिन्नत्वे यथा श्रीदशमे 10.60.45 _
त्वक्श्मश्रुरोमनखकेशपिनद्धम् अन्तर्
मांसास्थिरक्तकृमिविट्कफपित्तवातम्।
जीवच्छवं भजति कान्तम् अतिविमूढा
या ते पदाब्जमकरन्दम् अजिघ्रती स्त्री ॥७१॥

यथा वा विदग्धमाधवे 2.31 _
तस्याः कान्तद्युतिनि वदने मञ्जुले चाक्षियुग्मे
तत्रास्माकं यदवधि सखे दृष्टिर् एषा निविष्टा।
सत्यं ब्रूमस् तदवधि भवेद् इन्दुम् इन्दीवरं च
स्मारं स्मारं मुखकुटिलताकारिणीयं हृणीया ॥७२॥
उभयत्र शुचिबीभत्सयोः।

आश्रयभिन्नत्वे यथा _
विजयिनम् अजितः विलोक्य रङ्ग
स्थलभुवि सम्भृतसांयुगीनलीलम्।
पशुपसवयसां वपूंषि भेजुः
पुलककुलं द्विषतां तु कालिमानम् ॥७३॥
अत्र वीरभयानकयोः।

विषयाश्रयभेदेऽपि मुख्येन द्विषता सह।
सङ्गतिः किल मुख्यस्य वैरस्यायैव जायते ॥७४॥

तत्र विषयभेदे यथा _
विमोचयार्गलाबन्धं विलम्बं तात नाचर।
यामि काश्यगृहं यूना मनः श्यामेन मे हृतम् ॥७५॥
अत्र शुचेः प्रीतेन।

आश्रयभेदे यथा _
रुक्मिणीकुचकाश्मीरपङ्किलोरःस्थलं कदा।
सदानन्दं परं ब्रह्म दृष्ट्या सेविष्यते मया ॥७६॥
अत्र शान्तस्य शुचिना।

अनुरक्तधियो भक्ताः केचन ज्ञानवर्त्मनि।
शान्तस्याश्रयभिन्नत्वे वैरस्यं नानुमन्वते ॥७७॥

किं च _
भृत्ययोर् नायकस्येव निसर्गद्वेषिणोर् अपि।
अङ्गयोर् अङ्गिनः पुष्ट्यै भवेद् एकत्र सङ्गतिः ॥७८॥

यथा _
कुमारस् ते मल्लीकुसुमसुकुमारः प्रियतमे
गरिष्ठोऽयं केशी गिरिवद् इति मे वेल्लति मनः।
शिवं भूयात् पश्योन्नमितभुजमेधिर् मुहुर् अमुं
खलं क्षुन्दन् कुर्यां व्रजम् अतितरां शालिनम् अहम् ॥७९॥
अत्र विद्विषौ वीरभयानकौ वत्सलं पुष्णीतः।

यथा _
कम्प्रा स्वेदिनि चूर्णकुन्तलतटे इत्य् आदि BRS 4.8.31 ॥८०॥
तत्र हास्यकरुणौ वत्सलम् एव पुष्णीतः।

अपि च _
मिथो वैराव् अपि द्वौ यौ भावौ धर्मसुतादिषु।
कालादिभेदत् प्राकट्यं तौ विन्दन्तौ न दुष्यतः ॥८१॥
अधिरूढे महाभावे विरुद्धैर् विरसाः युतिः।
न स्याद् इत्य् उज्ज्वले राधाकृष्णयोर् दर्शितं पुरा ॥८२॥
क्वाप्य् अचिन्त्यमहाशक्तौ महापुरुषशेखरे।
रसावलिसमावेशः स्वादायैवोपजायते ॥८३॥

तत्र रसानां विषयत्वे यथा ललितमाधवे 3.4 __
दैत्याचार्यास् तदास्ये विकृतिम् अरुणतां मल्लवर्याः सखायो
गण्डौन्नत्यं खलेशाः प्रलयम् ऋषिगणा ध्यानमुष्णास्रम् अम्बाः।
रोमाञ्चं सांयुगीनाः कम् अपि नवचमत्कारम् अन्तः सुरेशा
लास्यं दासाः कटाक्षं ययुर् असितदृशः प्रेक्ष्य रङ्गे मुकुन्दम् ॥८४॥

आश्रयत्वे यथा _
स्वस्मिन् धूर्येऽप्य् अमानी शिशुषु गरिधृताव् उद्यतेषु स्मितास्यस्
थूत्कारी दध्नि विस्रे प्रणयिषु विवृतप्रौढिर् इन्द्रेऽरुणाक्षः।
गोष्ठे साश्रुर् विदूने गुरुषु हरिमखं प्रास्य कम्पः स पायाद्
आसारे स्फारदृष्टिर् युवतिषु पुलकी बिभ्रद् अद्रिं विभुर् वः ॥८५॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
रसानां मैत्रीवैरस्थितिनाम्नी लहरी अष्टमी ॥

४।९
रसाभासाख्या नवमलहरी

पूर्वम् एवानुशिष्टेन विकला रसलक्षणा।

रसा एव रसाभासा रसज्ञैर् अनुकीर्तिताः ॥१॥
स्युस् त्रिधोपरसाश् चानुरसाश् चापरसाश् च ते ।
उत्तमा मध्यमाः प्रोक्ताः कनिष्ठाश् चेत्य् अमी क्रमात् ॥२॥

अत्र उपरसाः —
प्राप्तैः स्थायिविभावानुभावाद्यैस् तु विरूपताम् ।
शान्तादयो रसा एव द्वादशोपरसा मताः ॥३॥

तत्र शान्तोपरसाः –
ब्रह्मभावात् परब्रह्मण्य् अद्वैताधिक्ययोगतः ।
तथा बीभत्सभूमादेः शान्तो ह्य् उपरसो भवेत् ॥४॥

तत्र आद्यं यथा –
विज्ञानसुषमाधौते समाधौ यद् उदञ्चति ।
सुखं दृष्टे तद् एवाद्य पुराणपुरुषे त्वयि ॥५॥

द्वितीयं यथा –
यत्र यत्र विषये मम दृष्टिस्
तं तम् एव कलयामि भवन्तम् ।
यन् निरञ्जन परावरबीजं
त्वां विना किम् अपि नापरम् अस्ति ॥६॥

अथ प्रीतोपरसः –
कृष्णस्याग्रेऽतिधाष्टर्येन तद्भक्तेष्व् अवहेलया ।
स्वाभीष्टदेवतान्यत्र परमोत्कर्षवीक्षया ।
मर्यादातिक्रमाद्यैश् च प्रीतोपरसता मता ॥७॥

तत्र आद्यं यथा –
प्रणयन् वपुर् विवशतां सतां कुलैर्
अवधीर्यमाणनटनोऽप्य् अनर्गलः ।
विकिर प्रभो दृशम् इहेत्य् अकुण्ठवाक्
चटुलो बटुर्व्यवृणुतात्मनो रतिम् ॥८॥

अथ प्रेयौपरसः –
एकस्मिन्न् एव सख्येन हरिमित्राद्यवज्ञया ।
युद्धभूमादिना चापि प्रेयानुपरसो भवेत् ॥९॥

तत्र आद्यं यथा –
सुहृद् इत्य् उदितो भिया चकम्पे
छलितो नर्मगिरा स्तुतिं चकार ।
स नृपः परिरिप्सतो भुजाभ्यां
हरिणा दण्डवद् अग्रतः पपात ॥१०॥

अथ वत्सलोपरसः –
सामर्थ्याधिक्याभिज्ञानाल् लालनाद्यप्रयत्नतः ।
करुणस्यातिरेकादेस् तुर्याश् चोपरसो भवेत् ॥११॥

तत्र आद्यं यथा –
मल्लानां यदवधि पर्वतोद्भटानाम्
उन्माथं सपदि तवात्मजाद् अपश्यम् ।
नोद्वेगं तदवधि यामि जामि तस्मिन्
द्राघिष्ठाम् अपि समितिं प्रपद्यमाने ॥१२॥

अथ शृङ्गारोपरसः । तत्र स्थायिवैरूप्यम् –
द्वयोर् एकतरस्यैव रतिर् या खलु दृश्यते ।
यान् एकत्र तथैकस्य स्थायिनः सा विरूपता ।
विभावस्यैव वैरूप्यं स्थायिन्य् अत्रोपचर्यते ॥१३॥

तत्र एकत्र रति¬ यथा ललितमाधवे –
मन्दस्मितं प्रकृतिसिद्धम् अपि व्युदन्तं
सङ्गोपितश् च सहजोऽपि दृशोस् तरङ्गः ।
धूमायिते द्विजवधूमदनार्तिवह्नाव्
अह्नाय कापि गैत्रि अङ्कुरिताम् अयासीत् ॥१४॥

अत्यन्ताभाव एवात्र रतेः खलु विवक्षितः ।
एतस्याः प्रागभावे तु शुचिर् नोपरसो भवेत् ॥१५॥

अनेकत्र रति¬ यथा –
गान्धर्वि कुर्वाणम् अवेक्ष्य लीलाम्
अग्रे धरण्यां सखि कामपालम् ।
आकर्णयन्ती च मुकुन्दरेणुं
भिन्नाद्य साध्वि स्मरतो द्विधासि ॥१६॥

केचित् तु नायकस्यापि सर्वथा तुल्यरागतः ।
नायिकास्व् अप्य् अनेकासु वदन्त्य् उपरसं शुचिम् ॥१७॥

विभाववैरूप्यम् –
वैदग्ध्यौज्ज्वल्यविरहो विभावस्य विरूपता ।
लतापशुपुलिन्दीषु वृद्धास्व् अपि स वर्तते ॥१८॥

तत्र लता यथा _
सखि मधु किरती निशम्य वंशीं
मधुमथनेन कटाक्षिताथ मृद्वी ।
मुकुलपुलकिता लतावलीयं
रतिम् इह पल्लवितां हृदि व्यनक्ति ॥१९ ॥

पशुर् यथा _
पश्याद्भुतास् तुङ्गमदः कुरङ्गीः
पतङ्गकन्यापुलिनेऽद्य धन्याः ।
याः केशवाङ्गे तदपाङ्गपूताः
सानङ्गरङ्गां दृशम् अर्पयन्ति ॥२० ॥

पुलिन्दी यथा _
कालिन्दीपुलिने पश्य पुलिन्दी पुलकाचिता ।
हरेर् दृक्कापलं वीक्ष्य सहजं या विघूर्णते ॥२१ ॥

वृद्धा यथा _
कज्जलेन कृतकेशकालिमा
बिल्वयुग्मरचितोन्नतस्तनी ।
पश्य गौरि किरती दृगञ्चलं
स्मेरयत्य् अघहरं जरत्य् असौ ॥२२ ॥

स्थायिनोऽत्र विरूपत्वम् एकरागतयापि चेत् ।
घटेतासौ विभावस्य विरूपत्वेऽप्य् उदाहृतिः ॥२३ ॥
शुचित्वौज्ज्वल्यवैदिग्ध्यात् सुवेशत्वाच् च कथ्यते ।
शृङ्गारस्य विभावत्वम् अन्यत्राभासता ततः ॥२४ ॥

अथ अनुभाववैरूप्यम् _
समयानां व्यतिक्रान्तिर् ग्राम्यत्वं धृष्टापि च ।
वैरूप्यम् अनुभावादेर् मनीषिभिर् उदीरितम् ॥२५ ॥

तत्र समयव्यतिक्रान्तिः _
समयाः खण्डितादीनां प्रिये रोषोदितादयः ।
पुंसः स्मितादयश् चात्र प्रियया ताडनादिषु ।
एतेषाम् अन्यथाभावः समयानां व्यतिक्रमः ॥२६ ॥

तत्र आद्यं यथा __
कान्तानखान्धितोऽप्य् अद्य परिहृत्य हरे ह्रियम् ।
कैलासवासिनीं दासीं कृपादृष्ट्या भजस्व माम् ॥२७ ॥

अथ ग्राम्यत्वम् __
बालशब्दाद्युपन्यासो विरसोक्तिप्रपञ्चनम् ।
कटीकण्डूतिर् इत्य् आद्यं ग्राम्यत्वं कथितं बुधैः ॥२८ ॥

तत्र आद्यं यथा __
किं नः फणिकिशोरीणां त्वं पुष्करसदां सदा ।
मुरलीध्वनिना नीवीं गोपबाल विलुम्पसि ॥२९ ॥

अथ धृष्टता _
प्रकटप्रार्थनादिः स्यात् सम्भोगादेस् तु धृष्टता ॥३० ॥

यथा _
कान्त कैलासकुञ्जोऽयं रम्याहं नवयौवना ।
त्वं विदग्धोऽसि गोविन्द किं वा वाच्यम् अतः परम् ॥३१ ॥

एवम् एव तु गौणानां हासादीनाम् अपि स्वयम् ।
विज्ञेयोपरसत्वस्य मनीषिभिर् उदाहृतिः ॥३२ ॥

अथ अनुरसाः __
भक्तादिभिर् विभावाद्यैः कृष्णसम्बन्धवर्जितैः ।
रसा हास्यादयः सप्त शान्तश् चानुरसा मताः ॥३३ ॥

तत्र हास्यानुरसः _
ताण्डवं व्यधित हन्त कक्खटी
मर्कटी भ्रूकुटीभिस् तथोद्धुरम् ।
येन वल्लवकदम्बकं बभौ
हासडम्बरकरम्बिताननम् ॥३४ ॥

अथ अद्भुतानुरसः _
भाण्डीरकक्षे बहुधा वितण्डां
वेदान्ततन्त्रे शुकमण्डलस्य ।
आकर्णयन् निर्निमिषाक्षिपक्ष्मा
रोमाञ्चिताङ्गश् च सुरर्षिर् आसीत् ॥३५ ॥

एवम् एवात्र विज्ञेया वीरादेर् अप्य् उदाहृतिः ॥३६ ॥
अष्टाव् अमी तटस्थेषु प्राकट्यं यदि बिभ्रति ।
कृष्णादिभिर् विभावाद्यैर् गतैर् अनुभवाध्वनि ॥३७ ॥

अथ अपरसाः __
कृष्णतत्प्रतिपक्षश् चेद् विषयाश्रयतां गताः ।

हासादीनां तदा ते ऽत्र प्राज्ञैर् अपरसा मताः ॥३८॥

तत्र हास्यापरसः _
पलायमानम् उद्वीक्ष्य चपलायतलोचनम् ।
कृष्णम् आराज् जरासन्धः सोल्लुण्ठम् अहसीन् मुहुः ॥३९॥

एवम् अन्येऽपि विज्ञेयास् तेऽद्भुतापरसादयः ।
उत्तमास् तु रसाभासाः कैश्चिद् रसतयोदिताः ॥४०॥

तथा हि _
भावाः सर्वे तदाभासा रसाभासाश् च केचन ।
अमी प्रोक्तरसाभिज्ञैः सर्वे ऽपि रसनाद् रसाः ॥४१॥

भारताद्याश् चतस्रस् तु रसावस्थानसूचिकाः ।
वृत्तयो नाट्यमातृत्वाद् उक्ता नाटकलक्षणे ॥४२॥

ग्रन्थस्य गौरवभयाद् अस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥
गोपालरूपशोभां दधद् अपि रघुनाथभावविसारी ।
तुष्यतु सनातनोऽस्मिन्न् उत्तरभागे रसामृताम्भोधेः ॥

इति श्रीश्रीभक्तिरसामृतसिन्धाव् उत्तरविभागे
रसाभासलहरी नवमी ॥

इति श्रीश्रीभक्तिरसामृतसिन्धौ गौणभक्तिरसनिरूपणो नाम चतुर्थो विभागः समाप्तः ।

रामाङ्गशक्रगणिते शाके गोकुलम् अधिष्ठितेनायम् ।
भक्तिरसामृतसिन्धुर् विटङ्कितः क्षुद्ररूपेण ॥

समाप्तोऽयं श्रीश्रीभक्तिरसामृतसिन्धुः ॥